Published by Javeri Mulchand Hirachand Bhagat, for Jinadattasoori Jnan Bhandar,
Mahaveer Swami's Temple, Pydhuny, Bombay

---

Printed by Ramchandra Yesu Shedge, at the Nirnaya Sagar Press, 26-28, Kolbhat Lane, Bombay

---

पुस्तकप्राप्तिस्थानम्

१ कल्याण भुवन मु० पालीताणा

२ महावीर स्वामीनुं देरासर पायधुनी मु० मुंबई

# प्रस्तावना ।

श्रीज्ञानादिधर्मैकनिष्ठाः परोपकरणशीला मोक्षाभिलाषिणो महाशयाः सुविदितमेतद् हेयोपादेयधर्माधर्माचरणीयानाचरणीयवस्त्ववस्त्वादिविवेकनिपुणानां विदुषां, यदुत आधिव्याध्युपाध्यात्मकत्रिविधतापाभितप्तानाममुमतां निरन्तरदुःखैकपूर्णे चतुर्गतिरूपसंसारमरुपथे भ्रमतां विना निर्वृतिं नास्ति निवृत्तिः । सा च ज्ञानक्रियाभ्यामेव । ते च वीतरागवाण्यैव । सा च चतुर्विधा द्रव्यानुयोगगणितानुयोगचरणकरणानुयोगधर्मकथानुयोगभेदात् । अयं च ग्रन्थश्चरणकरणानुयोगान्तर्वर्ती सर्वविरतदेशविरतसम्यक्त्वसन्मार्गानुसार्यादिसर्वसन्मार्गगामिहितकरः श्रीनवाङ्गवृत्तिकारश्रीमदभयदेवसूरीश्वरपट्टसुवर्णशैलभास्कर—श्रीजिनवल्लभसूरिभिर्ग्रथितो नानाप्रकारछन्दःसमलङ्कृतो धर्मोपदेशवैराग्यरसतरङ्गतरङ्गिणीसमो ग्रन्थश्चक्रनामा ।

सूरिपादाश्चेमे कदा भरतावनीमलञ्चक्रुः ? के तेषां गुरवः ? किं चाधीतं तैः ? इत्यादि जिज्ञासायां विस्तृततच्चरितार्थिना वि० सं० १२९५ वर्षे सुमतिगणिविरचिता गणधरसार्धशतकबृहद्वृत्तिर्विलोकनीया । तत्संक्षेपश्चायम्—

आसिकाभिधानदुर्गनिवासी चैत्यवासी कूर्चपुरीयो जिनेश्वराचार्य आसीत् । तत्रत्याः श्रावकपुत्रा बहवस्तन्मठेऽपठन् । तेषु च कश्चिन्मृतपितृको मातृवत्सलो जिनवल्लभनामा श्रावकपुत्रोऽतीव बुद्धिमानासीत् । तं निपुणं भाग्यवन्तं शासनोद्दीपकं भाविनं विलोक्य तन्मातरं सामदानाभ्यां प्रबोध्य शिष्यतया स गृहीतः । व्याकरणकाव्यच्छन्दोऽलङ्कारनाटकज्योतिर्मन्त्रतन्त्राद्यशेषविद्यानिपुणं कृत्वा तं सिद्धान्ताध्ययनाय श्रीपत्तने स्थितानां श्रीअभयदेवसूरीणां पार्श्वे प्रैषीत् । सूरिपादैश्च योग्यतां ज्ञात्वा सर्वोऽपि सिद्धान्तोऽध्यापितः ।

एव च गृहीतसिद्धान्तवाचनः सिद्धान्तोक्तक्रियासम्यगनुष्ठानबद्धमानसः समधिगतसस्फूर्तिज्योतिषः स्वगुरोः समीपे गमनाय मुत्कलवचन प्रतीच्छति, तदा प्रभुभिरभिहितम्—'वत्स ! सिद्धान्तोक्तसाधुसमाचारस्तावत्समस्तोऽपि त्वयावगतोऽवसरानुसारेण यथा वर्तसे तथा विधेयम्'। श्रीजिनवल्लभगणिना पादयोर्निपत्य भणितम्—'यथा श्रीपूज्यपादा आज्ञापयन्ति तथैव निश्चित प्रवर्तिष्ये' इति। ततोऽसौ स्वगुरुसमीपे गन्तुं प्रवृत्तः, प्राप्तो माइयडग्रामे आसिकादुर्गोपर्यांक क्रोशत्रये स्थितः। तत्र कश्चित्पुरुष प्रेष्य गुरु स्वमिलनायाजूहवत्। गुरुः 'किमिति सोऽत्र नागतः' इति वितर्कयन् सर्वलोकसमुदायसहितः समायातः, संमुख गत्वा तेनापि वन्दितः। कुशलवार्ता जाता। गुरुणा पृष्टं—'किमिति त्व नागतः' ?। तेनाभिहितम्—'भगवन्! सुगुरुमुखाज्जिनवचनामृत पीत्वा कथमधुना दुर्गतिदुःखावासनः समुपचितपाप चैत्यवास विषवृक्षसदृश सेवितुमिच्छामि' ? ततो गुरुणा भणितम्—'भो जिनवल्लभ ! ममेद चिन्तितमासीत् यत्तुभ्य स्वपद दत्त्वा त्वयि स्वगच्छदेवगृहभावकादिचिन्तां निवेश्य पश्चात्तव सद्गुरुपार्श्वे वसतिमार्गमङ्गीकरिष्ये'। ततो जिनवल्लभगणिना विकस्वरवदनारविन्देन भणितम्—'भगवन्! अतीव शोभनमेतत्, विवेकस्य हीदमेव फल, यद् हेयपरित्यागेनोपादेयमुपादीयते। तर्हि समकमेव सुगुरुसमीपे गम्यते'। गुरुणा ईषन्निःश्वस्य मत्यपादि यदुत—'वत्स! ईदृशी निःस्पृहता नास्त्यस्माकं यया चिन्ताकरणसमर्थं पुरुष विना स्वगच्छदेवगृहवाटिकादिचिन्तां मुक्त्वा सुगुरुपार्श्वे वसतिवासमङ्गीकुर्महे, अवश्य भवता विधातव्य वसतिवसनम्'। श्रीजिनवल्लभगणि —'भगवन्! एवम्'। ततो गुरुर्मापुच्छ्यासिकायां संप्राप्तः।

श्रीजिनवल्लभगणिरपि तत्संमत्या श्रीपत्तने विजहार। श्रीमदभयदेवसूरिपादा वन्दिताः प्रीणिताश्च। सूरयः स्वपदयोग्य त जानाना अपि दत्ताप्यमे न कथितवन्तः। यतो देवगृहनिवासिशिष्य इति गच्छस्य सम्मत न भविष्यतीति। ततो गच्छधारकः श्रीवर्धमानाचार्यः

स्वपदे निवेशितः, एकान्ते पुनः प्रसन्नचन्द्राचार्यो भणितः 'मदीयपदे भव्यलग्ने जिनवल्लभगणिः स्थापनीय' इति। ततो देवलोकं गताः श्रीमदभयदेवसूरयः।

ततो जिनवल्लभगणिर्गुर्जरत्रामेदपाटादिषु विहृतवान्। ते च सर्वेऽपि देशाः प्रायश्चैत्यनिवास्याचार्यैर्व्याप्ताः, सर्वोऽपि लोकस्तद्वासित एव सज्ज्ञानसदनुष्ठानसत्क्रियासदुपदेशाविना भाविज्ञानप्रभावादिना च प्रतिबोध्य वसतिवासमतानुरागीकृतः। चित्रकूटे कृतचातुर्मासिकजिनवल्लभगणिना उपदिष्टम्—"भोः श्रावकाः! अद्य आश्विनमासस्य कृष्णत्रयोदश्यां श्रीमहावीरदेवगर्भापहारकल्याणकं समागतम् "पंचहत्थुत्तरे हुत्था साइणा परिनिव्वुडे" इति प्रकटाक्षरैरेव सिद्धान्ते प्रतिपादनात्। ततोऽद्य दिने देववन्दना कार्या, सा च विधिचैत्ये कर्तव्या, तत्तु अत्र नास्ति, अतोऽत्रैव चैत्यवासिचैत्ये गत्वा यदि देवा वन्द्यन्ते तदा शोभनं भवति"। श्रावकैरुक्तम्—'भगवन्! यद् युष्माकं संमतं तत् क्रियते'। ततो गुरुसहिताः सर्वे श्रावका गृहीतनिर्मलपूजोपकरणा देवगृहे गन्तुं प्रवृत्ताः, प्राप्ताश्च तत्र। तत्र स्थितयाऽऽर्यिकयाऽऽत्मघातप्रतिज्ञापूर्वकं तेषां प्रवेशो निषिद्धः। तदप्रीतिकं ज्ञात्वा पूज्या निवृत्य स्वस्थानं गताः। ततः श्रावकाणां वचनेन एकस्य श्रावकस्य गृहोपरि चतुर्विंशतिपट्टकं धृत्वा देववन्दनादि सर्वं धर्मकार्यं कृतम्।

केचित्तु चरमतीर्थंकरस्य पञ्च कल्याणकान्येव मन्यन्ते यथा—"पंच हत्थुत्तरे" इत्यत्र नक्षत्रसाम्याद् गर्भापहारो मध्ये गणितः, परं कल्याणकानि तु "साइणा परिनिव्वुडे" इत्यनेन सह पञ्चैव इति, तत्तु चिन्तनीयमेव पुष्टप्रमाणाभावात्। तथा च "पंचहत्थुत्तरे" इत्यादि वचनस्यान्यथा व्याख्यानात्।

वस्तुतस्तु पंचहत्थुत्तरेति, व्याख्या—हस्तादुत्तरदिशि वर्तमानत्वात्, हस्त उत्तरो यासां वा, हस्तोपलक्षिता वा उत्तरा हस्तोत्तरा उत्त-

रफल्गुन्याः, बहुवचनं फल्गुनीशब्दस्य प्रायो बहुवचनान्तप्रयोगात्, यथा—"सिंहस्थमघा पूर्वाफल्गुन्यः पाद उत्तराणां च" इत्यादौ, प्रायोग्रहणात् क्वचित् हारिभद्रादौ 'हस्तोत्तरायाम्' इति एकत्वेऽपि न व्यामोहः । यत्तु कश्चित्—'बहुवचनं बहुकल्याणकापेक्षं' तदुपेक्षणीयमेव, प्रति फल्गुनीमेकैकहस्तमपेक्ष्य हस्ता उत्तरा यासामिति विगृह्य बहुव्रीहावपचेरित्यादि ।

अत्रेव गणनप्रक्रिया—पूर्वं यदुक्तवोक्तं 'बहुवचनं फल्गुनीशब्दस्य प्रायो बहुवचनान्तप्रयोगादिति', तदयुक्तम्, शब्दानुशासने पाणिनिना द्वित्वे विकल्पेन बहुत्वाभिधानात् प्रायोग्रहणं शब्दानुशासनानभिज्ञत्वमेव तव द्योतयति । हेमाचार्येणापि—'फल्गुनी योनिदैवता' इति पाठव्याख्यायां नाममालावृत्तावुक्त । वाचस्पतिः—'पूर्वफल्गुनी योनिदैवता' । शाब्दिकास्तु 'पूर्वफल्गुन्यौ पूर्वफल्गुन्य' इति मन्यन्ते, "फल्गुनी प्रोष्ठपदस्य भे" (सिद्धहे० २–२–१२३) इति द्वित्वस्य वा बहुत्वविधानात्, तथा च तत्सूत्रम्—'असत्वो द्वयोश्च' इति द्वित्वमनुवर्तते, फल्गुनी प्रोष्ठपदानां च नक्षत्रे, चकारः द्वयोरनुकर्षणार्थः फल्गुन्योर्द्वयोः प्रोष्ठपदयोश्च द्वयोर्नक्षत्रे बहुवचनमन्यतरस्यां भवति, यथा पूर्वे फल्गुन्यौ, यथा पूर्वाः फल्गुन्यः, यथा पूर्वे प्रोष्ठपदे, यथा पूर्वाः प्रोष्ठपदा इति । यत्तु कश्चित्—'बहुवचनं बहुकल्याणकेत्यादि' तदप्यनवबोधाविर्भावक, बहुवचनं बहुकल्याणकापेक्षं, इदमेव घटते द्वित्वेऽपि बहुत्वमस्तीति तद्व्यवच्छेदाय, तद्व्यवच्छेदकस्य पदेऽपि पदस्य पश्चाननपश्चागतत्वात्, 'पञ्चसु कल्याणकेषु हस्त उत्तरो यासां हस्तोत्तरा उत्तरफल्गुन्य' इत्युक्त कल्पावचूर्णे कुलमण्डनसूरिभिः । तथा प्रतिफल्गुनीमेकैकहस्तमपेक्ष्य हस्ता उत्तरा यासामिति विगृह्य 'बहुव्रीहावपचे' इति भूवदीपपाठे प्रतिफल्गुनीमित्यपपाठः, भवति च प्रतिफल्गुनीति अव्ययीभावात् अतिरिक्त इति । अर्थापेक्षया त्वय दोषः—एकैक हस्तमपेक्ष्य हस्ता उत्तरा यासामित्युक्त, तत्रान्यपदार्थबहुत्वे किं समस्यमानपदानामपि बहुत्वं स्यात्? येन हस्ता उत्तरा यासामित्युक्तमेव ? एवं च विशा

गोर्येपामिति समासे एकगोस्वामित्वेऽन्यपदार्थापेक्षया चित्रा गाव इति प्रसक्त स्यात्। तथाऽवधिमतो बहुत्वे किमवधेरपि बहुत्वेन भाव्य ? हस्तादुत्तरस्यां दिशि उत्तरफल्गुनीनां विद्यमानत्वेन किं हस्तस्यापि बहुत्व घटमान ? ध्रुवाद् ध्रौव्येण तत्तद्दिगाद्युपलक्षितमन्दिरादिवस्तुवृन्द वर्तत इति किं मन्दिरादिवस्तुबाहुल्ये ध्रुवस्यापि बाहुल्यं केनचित् परिकल्प्येत ? ततो नैवंविधो विग्रहाश्लिष्टो विग्रहकारी बहुव्रीहिरुदयमासादये-दिति कुतस्तदापत्तिविपत्तिः ? इति। तथा चतुर्णां च्यवनादीनां कल्याणकत्व गर्भापहारस्य नेति कुत उपलब्धिः ? 'पंचहत्थुत्तरे भगवान भूत्' इति कथनात्, भवन तु सर्वत्रापि समानमेव, यदि चत्वारि कल्याणकानि तदा भवतोऽनिष्टोऽप्ययं गर्भापहार कल्याणकत्वेन समापतित एव, 'सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यभाव एव' इति महाभाष्योक्ते यदि गर्भापहारस्याकल्याणकत्व तदा तन्निमित्तत्वात्तदन्येषा चतुर्णामप्येषामकल्याणकत्व बलादायातम्। अपि च यद्याश्चर्यभूतत्वेन न मन्यसे गर्भापहारे कल्याणकत्व तर्हि मल्लिस्वामिनोऽपि स्त्रीत्वे तीर्थकृत्त्व न स्वीकरणीयम् आशाम्बरवत्, तत्राप्याश्चर्यभूतत्वस्य समानत्वात्, तदुच्छेदे च तव गर्भक्षावेणेव गलिता तमधिकृत्य पञ्चक-ल्याणकव्यवस्था। तथा भवद्गुरुणा कुलमण्डनाचार्येणापि सम भवतो विरोधो दुर्निरोधः समापन्नः, तेन हि पञ्चानामपि कल्याणकत्व स्वीचक्रे त्वया च प्रतिषिध्यते, अहो ! गुरुशिष्ययोर्वर्य पारंपर्यम्। अथ गर्भापहारे च्यवनादिवस्तुचतुष्कवत् कल्याणकत्वव्यवस्थापिकामने-कशास्त्रसंमतिं दर्शयामः—पत्तनज्ञानकोशे ताडपत्रपुस्तिकाया चन्द्रकुले श्रीशीलभद्रसूरितच्छिष्यधर्मघोषसूरितच्छिष्ययशोभद्रसूरितच्छिष्य-देवसेनगणितच्छिष्यपृथ्वीचन्द्रसूरिकृते पर्युषणाकल्पटिप्पनके "हस्त उत्तरो यासा ताः, बहुवचन बहुकल्याणकापेक्ष, योगश्चन्द्रेण सह संबन्धः" ॥ १ ॥ तथा श्रीविनयेन्दुसूरिणा श्रीपर्युषणाकल्पाध्ययननिरुक्ते श्रीविक्रमात् शरयुगुणेन्दु ( १३२५ ) वर्षनिर्मिते—'ते ण काले ण ति' तस्मिन् काले यः पूर्वतीर्थकरैः श्रीवीरस्य च्यवनादिहेतुर्मासः कथितश्च यस्मिन् समये तीर्थकरश्च्यवति स एव समय उच्यते,

समयः कालनिर्धारणार्थः, यतः कालो वर्णोऽपि, यथा हस्त उत्तरो यासां ता हस्तोत्तरा उत्तरफल्गुन्यः, बहुवचनं बहुकल्याणकापेक्षं, तस्यां हि विभोश्च्यवनं गर्भाद्गर्भसंक्रान्तिः जन्म व्रतं केवलं चाभवत् निर्वृतिस्तु स्वातौ ॥ २ ॥ तथा चाचाराङ्गश्रुतस्कन्धाष्टमाध्ययनचूर्णौ—"ते णं काले णं तेणं समएणं जो भगवता उसभसामिणा सेसतित्थगरेहि य भगवतो वद्धमाणसामिणो चवणादीण छण्ह वत्थूण कालो णातो दिट्ठो वागरिओ य, तेणं काले णं ते णं समए णं ति", कालान्तर्गतः समयः, समयादिश्च कालः, सामण्णकालतो एस विसेसकालो स भतो हत्थस्स उत्तराओ हत्थुत्तराओ गणण पडुच्च हत्थोत्तरो जासिं ताओ हत्थुत्तराओ उत्तरफग्गुणीओ छट्ठीपक्खेण ति। यच्च वर्धमानस्वामिनः पञ्चाशकसूत्रे अभयदेवसूरिभिः श्रीअभयदेवसूरिभिः पञ्चैव कल्याणकानि उक्तानि, तथाहि—"सेसाण वि एवं चिय नियनियतित्थेसु विण्णेया ॥ ३६ ॥" शेषाणामपि, न वर्धमानस्यैव ऋषभादीनामपि वर्तमानावसर्पिणीभरतक्षेत्रापेक्षया, एवमेव इह तीर्थे, वर्धमानस्येव निजनिजतीर्थेषु स्वकीयस्व कीयभवचनावसरेषु, विज्ञेयानि ज्ञातव्यावसरेषु ज्ञातव्यानि, मुख्यवृत्त्या विवेचयतेति। इह च यान्येव गर्भादिदिनानि जम्बूद्वीपे भारताना-मृषभादिजिनानां तान्येव सर्वभरतानां सर्वैरवतानां, च यान्येव च एतेषामस्यामवसर्पिण्यां तान्येव च व्यत्ययेनोत्सर्पिण्यामपीति गाथार्थः। "पच महाकल्लाणा सव्वेसि जिणाण नियमेण" इति, तन्नियमविधायक वचः पञ्च भवन्त्येव न न्यूनानीति न्यूनत्वस्याघटमानत्वात्, न चाच्यु-तस्य जन्म, न चाजातस्य दीक्षा, न च तीर्थकृतो दीक्षामप्रतिपन्नस्य केवलं, न च तदभावे मुक्तिः, इत्यतो न्यूनत्वाभावे नियमः, आधिक्ये तु नियमो नास्ति, साक्षादनभिधीयमानत्वात्तस्य, यत्तत्र वीरस्य षष्ठे कल्याणके विशेषरूपे विद्यमानेऽपि पञ्चकल्याणकप्रतिपादनं तदविशेषा-र्थम्, उभयसाधारणपदापेक्षत्वादविशेषस्येति। यथा श्रीपञ्चमाङ्गे—"अत्थि णं भंते! सक्के देविंदे देवराया जाव महिड्ढीए जाव एवइयं च णं पभू विकुव्वित्तए, ईसाणे णं भंते! देविंदे देवराया के महिड्ढीए? एवं तहेव त्ति"। अत्र एव तहेवत्ति, अनेन यद्यपि शक्रसमानवक्तव्य-

मीशानेन्द्रप्रकर्षं सूचित, तथापि विशेषोऽस्ति, स चायम्—"से ण अट्ठावीसाए विमाणवाससयसहस्साण असीए सामाणियसाहस्सीण जाव
चउण्ह असीईण आयरक्खदेवसाहस्सीण ति" । यथा वा स्थानाङ्गे—पञ्चहत्थुत्तरो वीरो' इत्युक्त्वा किं स्वातौ वीरनिर्वाणकल्याणकाभावः
प्रतिपादितः ? किं त्वेकैकनक्षत्रोत्पन्नपञ्चपञ्चकल्याणकप्रतिपादनाधिकारात् सदपि षष्ठं वीरनिर्वृतिकल्याणकं नोक्तं, तद्वदत्रापि न दोषः ॥२॥
तथा संदेहविषौषध्यां श्रीजिनप्रभसूरिकृतायाम्—"पञ्चसु च्यवनगर्भापहारजन्मदीक्षाज्ञानकल्याणकेषु हस्तोत्तरा यस्य स तथा ॥ ४ ॥ तथा
कुलमण्डनसूरिकृत् कल्पावचूरौ—"पञ्चसु कल्याणकेषु हस्त उत्तरो यासां हस्तोत्तरा उत्तरफल्गुन्यः ॥ ५ ॥ तथा श्रीस्थानाङ्गे पञ्चमस्थाने
प्रथमोद्देशके—"पउमप्पभस्स चित्ता मूलो पुण होइ पुप्फदंतस्स। पुव्वाइं ते आसाढा सीयलस्स उत्तर विमलस्स भद्दवया ॥१॥ रेवतिता अणत-
जिणो पुसो धम्मस्स संतिणो भरणी। कुंथुस्स कत्तिताओ अरस्स तह रेवतीतो य ॥२॥ मुणिसुव्वयस्स सवणो आसिणि णमिणो य नेमिणो
चित्ता । पासस्स विसाहा उ, पंच य हत्थुत्तरो वीरो ॥ ३ ॥ समणे भगवं महावीरे पञ्चहत्थुत्तरे होत्था, त जहा—हत्थुत्तराहिं चुए, चइत्ता
गब्भं वक्कंते, हत्थुत्तराहिं गब्भाओ गब्भं साहरिए, हत्थुत्तराहिं जाए, हत्थुत्तराहिं मुंडे भवित्ता जाव पव्वइए, हत्थुत्तराहिं अणंते अणु
त्तरे जाव केवलवरनाणदसणे समुप्पण्णे" । अत्र गर्भापहारस्यान्यचतुष्कसमवोद्देशेन कल्याणकत्वं स्वत एव निर्व्यूढम् ॥ ४ ॥

अत्र केचित्प्रतिपादयन्ति—प्रथमतीर्थंकरस्य उत्तराषाढासु जम्बूद्वीपप्रज्ञप्त्यां राज्याभिषेक उक्तः, सोऽपि कल्याणकत्वेनास्तु, नैवम्, तस्य
मासतिथ्योरनुक्तत्वात् कस्मिन्मासे कस्मिन् (कस्यां) तिथावाराधनं कुर्म ? गर्भापहारे च आवश्यकनिर्युक्तौ मासतिथिनक्षत्राणामुक्तत्वादा-
राधनं घटते। अन्यच्च राज्याभिषेकस्य कल्याणकत्वं यदि स्यात्तदा पञ्चोत्तराषाढासु पञ्चवस्तूनामेषामुक्तत्वात् स्थानाङ्गे किमिति पञ्चमस्थानके
पद्मप्रभादिवदेकनक्षत्रेऽस्याऽपि प्रतिपादनं नाकारि समानयोगक्षेमत्वात् ?। तथाऽन्येषामपि तीर्थकृतां राज्याभिषेक उक्तोऽस्ति, परं न कल्या-

णक्खत्तेन न्यगादि । जम्बूद्वीपप्रज्ञप्त्यामय पाठः—" तसमे णं अरहा पच उत्तरा अभीइ छट्ठे होत्था, तं जहा—उत्तरासाढाहिं चुए, चइत्ता गब्भं वक्कंते, उत्तरासाढाहिं जाए, उत्तरासाढाहिं रायाभिसेयपत्तो, उत्तरासाढाहिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए, उत्तरासाढाहिं अणंते जाव समुप्पण्णे, अभीइणा परिनिव्वुए" । तथा आगमिकश्रीजयतिलकसूरिविरचिते सम्यक्त्वसंभवनाम्नि महाकाव्ये सुलसाचरिते गाम्यपरयपरीक्षणनाम्नि षष्ठे सर्गे—"सिद्धार्थराजाङ्गजदेवराज ! कल्याणकैः पञ्चभिरिति स्तुतस्त्वम् । तथा विधेह्यान्तरवैरिपङ्क्तु, यथा सयाम्यासु तव प्रसादात् ॥ ५० ॥ इति स्तुत्वा जिनाधीशं, त्रिः प्रणम्याम्बडो मुनिः । विशिवास्यः समा(मा)सीनोऽश्रौषीद्धर्मदेशनाम् ॥ २ ॥" इति ॥ ७ ॥

तथा श्रीजिनदत्तसूरिभिरप्युक्तम्—"गब्भापहारकल्लाणग पि न हु होइ वीरस्स" इत्युत्सूत्रम् ।

तथा सङ्घपट्टकबृहद्वृत्तौ—"सुज्ञानां लिङ्गिनामाचीर्णानि सिद्धान्तोक्तमपि श्रीमहावीरस्य षष्ठं गर्भापहारकल्याणकं कथनीयत्वान्न कर्तव्यम् इत्यादिका आपत्तिः इति । तदेव सिद्धान्तपक्षमुररीकृत्यापि तत्प्रतिक्षेपायोपक्रमम् सतां कथं नोपहास्यतां यासि ? ॥ इत्यलमतिविस्तरेण ।

ततो विधिचैत्याभावे सीदतः श्रावकान् ज्ञात्वा गुरुभि —

"जिनभवनं जिनबिम्बं, जिनपूजां जिनमतं च यः कुर्यात् । तस्य नरामरशिवसुख—फलानि करपल्लवस्थानि ॥ १ ॥"

इत्यादि देशनायामुपदिष्टम् । तत्र श्रावकैर्विधिचैत्यद्वय निर्मापितमित्यादि सदुपदेशेन, अनागतज्ञानेन, समस्तापूर्वानेकविषमकल्पा चैभिर्गुरुभिः श्राद्धापायोऽपि वशमानीताः, धारानगर्यां च नरवर्मनृपात्सम्मान प्राप्तः, विधिचैत्यस्थापनाऽपि स्थाने स्थाने कारिता । क्रमेण

श्रीमप्रभवदेवसूरिपद सूरिपदेन विभूष्य शासनोद्दीपिकाः इमे श्रीजिनवल्लभसूरयः वि० सं० ११६७ कार्तिककृष्णद्वादश्यां रजनीचरम

यामे पञ्चपरमेष्ठिमन्त्रपरावर्तन कुर्वन्तः चतुर्थदेवलोक प्राप्ता ।

पूज्यपादैरेभिः सूक्ष्मार्थसिद्धान्त—विचारसारषडशीति—सार्धशतकाख्यकर्मग्रन्थ—पिण्डविशुद्धि—पौषधविधि—प्रतिक्रमणसामाचारी—संघप-

ट्टक—धर्मशिक्षा—प्रश्नोत्तरशतक—शृङ्गारशतक—नानाप्रकारविचित्रचित्रकाव्यसार—शतसंख्यस्तुतिस्तोत्रादिग्रन्था ग्रथिता विलोक्यन्तेऽधुनाऽपि।

( अस्य विवरणस्याद्यन्ते चैतत्संक्षिप्तचरितस्य बीज विवरणकर्त्रा प्रदर्शितम् )

विवरणकर्तारश्चास्य ग्रन्थस्य श्रीजिनपालोपाध्यायपादा कदा जन्मदीक्षादि प्राप्तुवन्निति सम्यग ज्ञायते, परन्तु एतद्विवरण सं १२९३

वर्षे कृतमिति एतत्प्रशस्तिगतसप्तमश्लोकात् स्पष्ट ज्ञायते तेषां सत्ताकालः । तथा एतत्कुलककर्तृश्रीजिनवल्लभसूरिपट्टधरशिष्य श्रीजिनदत्तसूरि-

स्तत्पट्टधरशिष्य श्रीजिनचन्द्रसूरिस्तत्पट्टधरशिष्य श्रीजिनपतिसूरेः शिष्य श्रीजिनपालोपाध्यायः श्रीमज्जिनेश्वरसूरेः श्रीजिनचन्द्रसूरिपट्टधरस्य

वाक्यादिद विवरण चकारेति स्पष्टमेवप्रशस्तौ । किं चास्य कृतिक्रमोऽपभ्रंशकाव्यत्रयीभूमिकायामित्थ लिखितः—

वि० स० १२६२ वर्षे षट्स्थानकवृत्तिः । सनत्कुमारचक्रिचरित सटीक महाकाव्यम् ।

वि० स० १२९२ वर्षे उपदेशरसायनविवरणम् । वि० सं० १२९३ वर्षे द्वादशकुलकविवरणम् ।

वि० सं० १२९३ वर्षे पञ्चलिङ्गीविवरणटिप्पनम् । वि० सं० १२९४ वर्षे चर्चरीविवरणम् ।

स्वप्नविचारभाष्यादि ।

इत्यादि उपाध्यायपादानामेषां किञ्चिदधिक परिचमपञ्चशकाव्यत्रयीभूमिकायां दृश्यते इति सधर्मिभिरवलोक्यम् ।

अथ ग्रन्थो धर्मजिज्ञासूनामुपयुक्ततरोऽप्रसिद्धश्चेति श्रीखरतरगणनायक श्रीजिनकृपाचन्द्रसूरीश्वरोपदेशामृतधाराधौतचित्तया गुर्जरदेशभूषणसूरतपुरवास्तव्य जह्वेरी प्रेमचन्द्रमाढस धर्मपत्न्या श्रीमत्या "रतनबेन" नामधेयया स्वपरोपकारार्थं दत्तेन द्रव्यसाहाय्येन मुद्रापितः ।

अस्य च मुद्रणावसरे बीकानेरस्थश्रीजिनकृपाचन्द्रसूरिज्ञानभाण्डारात् पूज्यप्रवर्तकश्रीकान्तिविजयप्रसादेन वाडीपार्श्वनाथज्ञानभाण्डागारात्, महोपाध्यायश्रीदेवविजयगणिज्ञानभाण्डागारात् प्राप्ता लिखितप्रतयस्तिस्रः शुद्धिविषय उपयुक्ततरा जाता, अतः प्रतिसाहाय्यकारिणामेषां महात्मनां महोपकारो मन्यते ।

अस्य ग्रन्थस्य शुद्धशोधने अस्मत् गुरुवर्यप्रवर्तक मुनि सुखसागर महाराजेन अतिपरिश्रमेण तथा च भावनगरनिवासि श्रीजैनधर्मप्रसारकसमायपि शास्त्री जेठालाल हरिभाईत्यनेन कृतेऽपि दृष्टिदोषाच्छाद्मस्थ्यात्प्रमादान्मुद्रणयन्त्रदोषाद्वा यत्र यत्र स्खलितं दृक्पथमायात् तत्र विद्वद्भिर्महात्मभिः क्षमाधनैः सम्यक् संशोध्य ज्ञापनीया यथ यतो द्वितीयावृत्तिसमये तद्विषये यत्यते इति प्रार्थयते—

विदुषां वशंवदः

श्रीजिनकृपाचन्द्रसूरीश्वरचरणसरोजभृङ्गप्रवर्तक श्रीसुखसागरशिष्याणुः मङ्गलसागरो मुनिः

वि० सं० १९९० मार्गशुक्लपञ्चमी पालीताणानगरे.

## विषयानुक्रमणिका ।

॥ अर्हम् ॥

श्रीनवाङ्गीवृत्तिकारश्रीमज्जिन-अभयदेवसूरिशिष्य-श्रीमज्जिनवल्लभसूरिविरचितम्

# द्वादशकुलकम्.

श्रीमज्जिनपतिसूरिशिष्य-प्रवरपण्डितश्रीमज्जिनपालकृतविवरणसमेतम् ।

---

## प्रथमकुलकम् ।

नृत्यन्नानाविलासोद्धुरविबुधवधूसत्कटाक्षच्छटाभिः, श्वेताभिः श्वेतिमानं स्तबकितमभजन् नूनमङ्ग समग्रम् ।
श्रीमज्जन्माभिषेके सुरगिरिशिखरे यस्य लोकैकबन्धोः, स श्रीचन्द्रप्रभाख्यो जिनपतिरसमश्रेयसे वः सदा स्तात् ॥ १ ॥
श्रीमच्चान्द्रकुलाम्बरैकतरणेः श्रीवर्द्धमानप्रभोः, शिष्यः सूरिजिनेश्वरो मतिवचःप्रागल्भ्यवाचस्पतिः ।
आसीद् दुर्लभराजराजसदसि प्रख्यापितागारवद्,-वेश्मावस्थितिरागमज्ञसुमुनिभ्रातस्य शुद्धात्मन ॥ २ ॥

तस्मादमूभवनवाङ्गविवृत्तिवेधा, मेधानिधेस्तनुतरो जिनचन्द्रसूरेः ।
संस्थापितानुपमधामजिनेन्द्रपार्श्वः, श्रीस्तम्भने पुरवरेऽभयदेवसूरिः ॥ ३ ॥

अर्थानामृद्धते स्वातिगहनरचनागूढताभाजि वृत्ते–ऽशीतिं युक्तां चतुर्भिश्चतुरतरमतिर्यः सुविधानिधानम् ।
द्रोणाचार्यप्रधानैः स्तुत इति मुदितैः पत्तने संघमुख्यैर्नून धात्रा चरिष्णुः प्रवचनतिलकः कौतुकान् निर्ममेऽसौ ॥ ४ ॥
तथा च तद्युक्तिः ॥ आचार्याः प्रतिसद्म सन्ति महिमा येषामपि प्राकृतैर्मातु नाध्यवसीयते सुचरितैर्येषां पवित्रं जगत् ।
एकेनापि गुणेन किन्तु जगति प्रज्ञाधना साम्प्रतं, यो धत्तेऽभयदेवसूरिसमतां सोऽस्माकमावेद्यताम् ॥ ५ ॥
तस्य ख्यातिं निशम्य श्रुतनिकषनिधेर्गौतमस्येव दूरात्, पुर्याः श्रीआशिकायाः प्रवररजतकृत्त्वेन कल्लोलवर्षः ।
एव विख्यातकीर्त्तिः सितपटवृषभः प्रैषयत् स्वं विनेय, त्रैविद्यं शान्तदान्तं निशमनविषयेऽप्यागमस्यास्य पार्श्वे ॥ ६ ॥
शिष्योऽथ स श्रीजिनवल्लभाख्यश्चैत्यासिनः सूरिजिनेश्वरस्य ।
प्राप्य प्रसन्नोऽभयदेवसूरिं, ततोऽग्रहीज्ज्ञानचरित्रचर्य्याम् ॥ ७ ॥
शुभगुरुपदसेवावाप्तसिद्धान्तसारावगतिगलितचैत्यावासमिथ्यास्वभावः ।
गृहिगृहवसतिं स स्वीचकारातिशुद्धां, सुविहितपदवीवद् गाढसंवेगरङ्गः ॥ ८ ॥
तथास्य संविग्नशिरोमणेरमून्मनः प्रसन्नं सकलेषु जन्तुषु ।
जिनानुकृत्या भुवनं विबोधयन्, यथा न शश्राम महामनाः स्वयम् ॥ ९ ॥
धर्मोपदेशकुलकाङ्कितसारलेखैः, श्राद्धेन बन्धुरधिया गणदेवनाम्ना ।

१ आचार्यैरतिकोविदैश्च इति पाठान्तरम् ।

प्राबोधयत् सकलवागडदेशलोक, सूर्योऽरुणेन कमल किरणैरिव स्वैः ॥ १० ॥
तानि द्वादश विस्तृतानि कुलकान्यम्भोधिवद् दुर्गमान्यत्यन्तं च गभीरभूरिसुपदान्युन्मिद्रतार्याणि च ।
व्याख्यातु य उपक्रम कृशधियाऽप्याधीयते मादृशो–नारोढु तदमर्त्यशैलशिखर प्रागल्भ्यत पङ्गुना ॥ ११ ॥
एव श्रीजिनवल्लभस्य सुगुरोश्चारित्रिचूडामणेर्भव्यप्राणिविबोधने रसिकता वीक्ष्यानुता शाश्वतीम् ।
आदेशाद् गुणविज्ञवाङ्मयविभृतिप्रस्तावकस्यादरात्, प्राप्तात् सूरिपद मुदञ्चितवपु श्रीदेवभद्रः प्रभुः ॥ १२ ॥

इह हि संप्रति विशिष्टज्ञानवत्पुरुषसम्पर्कार्कोद्द्योताभावेन भव्यजनानामपि अपगतसम्यग्दर्शनविवेकविलोचनाना भगवान् कारुण्यरसपाथोनिधि श्रीमत्तीर्थाधिपोपदिष्टश्रुतनिकषावगमप्रवर्त्तितसम्यक्सारविधिः समस्तविद्यानितम्बिनीचुम्बितवदनारविन्द समभिनन्दितसत्कविकोविदवादिवृन्दः श्रीमज्जिनवल्लभसूरिमुनिवरः, तदुपचिकीर्षया विवेकलोचनोन्मीलकरसायनाञ्जनशलाकाप्रख्यानि द्वादशकुलकानि आविश्चकार । तेषामपि प्रवरधर्मोपदेशप्रस्तावनाप्रख्यमाद्यकुलकमारभमाणः समर्शस च विनेया धर्मे उपदेष्टव्या इति शिष्टसमाचार सत्यापयन् तेषा सकलगुणोपेतत्वेनोपदेशाविषयतामाशङ्क्य साधुसमाचारमात्रस्येन उपदिश्यत इति उपदर्शयन् प्रथमवृत्तमाह—

कुलप्पसूयाण गुणालयाण, तुम्हाण धम्मे सयमुज्जयाण ।
नत्थेव किंची उवदेसणिज्ज, तहावि कप्पुत्ति भणामि किंचि ॥ १ ॥

कारिणो दुष्टचेष्टकाः । रौद्रचित्तपुरे लोकाः, सन्ति द्रोहादयः खलाः ॥ ५ ॥ ते तेऽपि तत्समास्तस्यास्ते ते सर्वस्वनायकाः । अतश्चरटमुन्द्रस्य, देवी साऽत्यन्तवल्लभा ॥ ६ ॥ युग्मम् ॥ दुष्टाभिसन्धिराजेन्द्र, तं भर्तारं दिवानिशम् । मन्यते परमात्मानं, सा शुश्रूषापरायणा ॥ ७ ॥ न मुञ्चति च पार्श्वं, तथाहृदयति वल्लभम् । अनुरक्ता निजे पत्यौ, सा देवी तेन वर्ण्यते ॥ ८ ॥ तस्याश्च निष्करुणताया महादेव्या अभिवृद्धिहेतुस्तस्य रौद्रचित्तपुरस्य वल्लभा तन्निवासिजनानां विनीता जननीजनकयोरतिभीषणा स्वरूपेण साक्षात्कालकूटसम्पुटघटितेव हिंसा नाम दुहिता, तथाहि—यतः प्रभृति सा जाता, कन्यका राजमन्दिरे । तत आरभ्य तत्सर्वं, पुरं समभिवर्धते ॥ १ ॥ राजा पुष्टतरीभूतो, देवी स्थूलत्वमागता । भवोऽभिवृद्धिहेतु सा, पत्तनस्य सुकन्यका ॥ २ ॥ ईर्ष्याप्रद्वेषमात्सर्यचण्डत्वाक्षमादयः । प्रधाना ये जनास्तत्र, पुरे विख्यातकीर्तयः ॥ ३ ॥ तेषामानन्दजननी, सा हिंसा प्रविलोकिता । स्थिता परापरोत्सङ्गे, सञ्चरन्ती करात्करे ॥ ४ ॥ चुम्ब्यमाना जनेनोच्चैर्यम्प्रमीति निजेच्छया । सा तन्निवासिलोकस्य, तेनोक्ताऽत्यन्तवल्लभा ॥ ५ ॥ दुष्टाभिसन्धिनृपतेर्वचनं नातिवर्तते । सा निष्करुणतादेव्या, वचनेन प्रवर्तते ॥ ६ ॥ शुश्रूषातत्परा नित्यं, तयोर्हिंसा सुपुत्रिका । जननीजनकयोस्तेन, सा विनीतेति गीयते ॥ ७ ॥ भीषणा सा स्वरूपेण, यथाभिहितमञ्जसा । तदिदानीं मया सम्यक्कथ्यमानं निबोधत ॥ ८ ॥ अपि सा नाममात्रेण, त्रासकम्पविधायिका । सर्वेषामेव जन्तूनां, किं पुनः प्रविलोकिता ? ॥ ९ ॥ साऽधोमुखेन शिरसा, नरके नयति देहिनः । सा संसारमहावर्तगर्तसंपातकारिका ॥ १० ॥ सा मूलं सर्वपापानां, सा धर्मध्वंसकारिणी । सा हेतुश्चित्ततापानां, सा शास्त्रेषु विगर्हिता ॥ ११ ॥ किंचेह बहुनोक्तेन ?, नास्त्येव ननु तादृशी । लोकेऽपि दारुणाकारा, सा हिंसा हन्त यादृशी ॥ १२ ॥ इतश्चास्ति तामसचित्तं नाम नगरं, तत्र महामोहतनयो द्वेषगजेन्द्रो नाम नरेन्द्रः प्रतिवसति, इतश्च या प्रागाख्याता वैश्वानरस्य जननी मम धात्री अविवेकिता नाम ब्राह्मणी, सा तस्य द्वेषगजेन्द्रस्य भार्या

भवति, सा च केनचित्प्रयोजनेन ततस्तामसचित्तनगराद्बहिःस्थिते सति वैश्वानरे तत्र रौद्रचित्तपुरे समागताऽऽसीत्, यादृक् च तामसचित्त नगरं यादृशोऽसौ द्वेषगजेन्द्रो राजा यादृशी साऽविवेकिता यच्च तस्यास्तामसचित्तनगराद्रौद्रचित्तपुरं प्रत्यागमनप्रयोजनमेतत् सर्वमुत्तरत्र कथयिष्यामः, केवलं भद्रेऽगृहीतसङ्केते! न तदाऽस्य व्यतिकरस्याहं गन्धमपि ज्ञातवान्, इदानीमेवास्य भगवतः सदागमस्य प्रसादादिदं समस्तं मम प्रत्यक्षीभूतं, तेन तुभ्यं कथयामि, ततः साऽविवेकिता तत्र रौद्रचित्तपुरे स्थिता कियन्तमपि कालं, जातो दुष्टाभिसन्धिना सह परिचयः, यतो द्वेषगजेन्द्रप्रतिबद्ध एवासौ दुष्टाभिसन्धिनरेन्द्रः, ततोऽविवेकितायाः किङ्करभूतो वर्तते, ततः साऽविवेकिता मां मनुजगतौ समागतमवगम्य ममोपरि स्नेहवशेनागत्य ततो रौद्रचित्तपुरात् स्थिता सन्निहिता, जातोऽस्या मम जन्मदिने वैश्वानरो, वृद्धिं गत क्रमेण, कथितस्तया तस्मै सर्वोऽप्यात्मीयः स्वजनवर्गः, ततस्तस्य वैश्वानरस्य तत्र मार्गे मया सह गच्छतः समुत्पन्नैवम्भूता बुद्धिः यदुत—नयाम्येनं नन्दिवर्धनकुमारं रौद्रचित्तपुरे, दापयाम्यस्मै दुष्टाभिसन्धिना तां हिंसाकन्यकां, ततस्तया परिणीतया ममैष सर्वप्रयोजनेषु गाढतरं निर्व्यभिचारो भविष्यति, ततो विचिन्त्य तेनैवमभिहितोऽहं तत्र गमनार्थं, मयोक्तं—कनकशेखरादयोऽपि गच्छन्तु, वैश्वानरः प्राह—कुमार! नामीषां तत्र गमनप्रसरो, यतोऽन्तरङ्गं तद्रौद्रचित्तं नगरं, ततो विना परिजनेन मत्सहाय एव कुमारस्तत्र गन्तुमर्हति, ततस्तदाकर्ण्याहमलङ्घनीयतया तद्वचनस्य गुरुतया तत्र स्नेहभावस्य अज्ञानोपहततया चित्तस्यानाकलय्य तस्य परमशत्रुतां अपर्यालोच्यात्महिताहितं अदृष्ट्वाऽप्यागामिनीमनर्थपरम्परां गतो वैश्वानरेण सह रौद्रचित्तपुरे दृष्टो दुष्टाभिसन्धिः दापिता वैश्वानरेण मम तेन हिंसा परिणीता क्रमेण कृतमुचितकरणीयं ततः प्रहितो दुष्टाभिसन्धिना सहितो हिंसावैश्वानराभ्यां, मिलितोऽहं कनकशेखरादिबले, गच्छता मार्गे प्रारब्धः सहर्षेण वैश्वानरेण सह जल्पं यदुत—कुमार! कृतकृत्योऽहमिदानीं, मयोक्तं—कथम्?, स प्राह—यदेषा परिणीता कु-

कारिणो दुष्टचेष्टका । रौद्रचित्तपुरे लोकाः, सन्ति प्रोह्यप्य सला ॥ ५ ॥ ते तेऽविवक्ष्माक्षस्यास्ते ते सर्वेस्तनायकाः । अतश्चरटपु- न्नम्य, देवी साऽत्यन्तवल्लभा ॥ ६ ॥ युग्मम् ॥ दुष्टाभिसन्धिराजेन्द्र, स भर्तारं दिवानिशम् । मन्यते परमात्मान, सा शुभ्रूषापरायणा ॥ ७ ॥ न मुञ्चति च सदेदं, संवाहयति तत्क्रमम् । अनुरक्ता निजे पत्यौ, सा देवी तेन वर्ण्यते ॥ ८ ॥ तस्याश्च निष्करुणताया महादेव्या अभि- पृष्ठिहेतुभस्य रौद्रचित्तपुरस्य वल्लभा तन्निवासिजनानां विनीता जननीजनकयोरतिसमीपष्मा स्वरूपेण साक्षात्कालकूटसम्पुटघटितेव हिंसा नाम दुहिता, तथाहि—यतः प्रभृति सा जाता, कन्यका राजमन्दिरे । तत आरभ्य तत्सर्वं, पुरं समभिवर्धते ॥ १ ॥ राजा पुष्टशरी- भूतो, देवी स्थूलत्वमागता । अतोऽभिवृद्धिहेतु सा, पठनस्य सुकन्यका ॥ २ ॥ ईर्ष्याप्रद्वेषमात्सर्यचण्डत्वाप्रशमादयः । प्रधाना ये जना स्तत्र, पुरे विख्यातकीर्तय ॥ ३ ॥ तेषामानन्दजननी, सा हिंसा प्रविलोकिता । स्थिता परापरोत्सङ्गे, सञ्चरन्ती करात्करे ॥ ४ ॥ चु- म्ब्यमाना जनेनोच्चैयम्भ्रमीति निजेच्छया । सा तन्निवासिलोकस्य, तेनोक्ताऽत्यन्तवल्लभा ॥ ५ ॥ दुष्टाभिसन्धिनृपतेर्वचनं नातिवर्तते । सा निष्करुणतादेव्या, वचनेन प्रवर्तते ॥ ६ ॥ शुभूषावत्सरा नित्य, तयोर्हिंसा सुपुत्रिका । जननीजनकयोस्तेन, सा विनीतेति गीयते ॥ ७ ॥ भीषणा सा स्वरूपेण, यथाभिहितमञ्जसा । तदिदानीं मया सम्यक्कथ्यमान निबोधत ॥ ८ ॥ अपि सा नाममात्रेण, त्रासकम्पविधायिका । सर्वेषामेव जन्तूनां, किं पुनः प्रविलोकिता ? ॥९॥ साऽधोमुखेन शिरसा, नरकं नयति देहिन । सा संसारमहावर्तगर्वसपातकारिका ॥१०॥ सा मूलं सर्वपापानां, सा धर्मध्वंसकारिणी । सा हेतुश्चित्तपापाना, सा शास्त्रेषु विगर्हिता ॥ ११ ॥ किंचेह बहुनोक्तेन ?, नास्त्येव ननु तादृशी । लोकेऽपि दारुणाकारा, सा हिंसा हन्त यादृशी ॥ १८ ॥ इतश्चास्ति तामसचित्त नाम नगरं, तत्र महामोहतनयो द्वेषगजेन्द्रो नाम नरेन्द्रः प्रतिवसति, इतश्च या प्रागाख्याता वैश्वानरस्य जननी मम धात्री अविवेकिता नाम ब्राह्मणी, सा तस्य द्वेषगजेन्द्रस्य भार्या

घलेन प्रबलवीर्यो देवतानुग्रहेण, तथापि सन्निहितपुण्योदयमाहात्म्यान्मे न लगन्ति स्म तदीयशिलीमुखाः न प्रभवन्ति स्म तदीयशस्त्राणि न वहन्ति स्म तस्य विद्याः अकिञ्चित्करीभूता देवता, मम तु चेतसि परिस्फुरित—अहो प्रियमित्रवटकस्य प्रभावातिशयो यदस्य तेजसा ममाय रिपुर्दृष्टिमपि धारयितु न पारयति, ततो मया [तथा] वैश्वानरवटकप्रभावाधिष्ठितेन स प्रवरसेनशबरनायको विच्छिन्नकार्मुकः प्रतिहतक्षेपान्यशस्त्रः सन् गृहीतचर्मरत्नभास्वरकरवालः स्यन्दनादवतीर्य स्थितो भूतले प्रस्थितो मदभिमुख, अत्रान्तरे पार्श्ववर्तिन्या विलोकितोऽहं हिंसया जातो गाढतरं रौद्रपरिणामः मुक्तो मया कर्णान्तमाकृष्य निशितोऽर्धचन्द्रः छिन्न तेन तस्यागच्छतो मस्तक, समुल्लसितोऽस्मद्बले कलकलः निपातिता ममोपरि देवैः कुसुमवृष्टि वृष्ट सुगन्धोदक समाहता दुन्दुभय समुद्घोषितो जयजयशब्दः, ततो हतनायकत्वाद्विपण्ण चरटबल अवलम्बितप्रहरण गत मे शरण, प्रतिपन्न मया, निवृत्तमायोधन, सजात सन्धिः, प्रतिपन्न सर्वचरटैर्मम भृत्यभाव , मया चिन्तित—अहो हिंसाया माहात्म्यप्रकर्ष यदनया विलोकितस्यापि ममैतावानुन्नतिविशेष सपन्न इति, सन्मानितास्तेऽपि कनकशेखरादिभि , दत्त प्रयाणक, समासा वय कुशावर्त्तपुरे, समानन्दितः कनकशेखरकुमारागमनेन कनकचूडराजः तुष्टो मद्दर्शनेन ततो विधापितस्तेन महोत्सवः पूजित प्रणयिवर्गः, ततो गणित विमलाननारत्नवत्योर्विवाहदिन समागत पर्यायेण कृतमुचितकरणीय, ततो दीयमानैर्महादानैर्विधीयमानैर्जनसन्मानैर्बहुविधकुलाचारैः संपाद्यमानैरभ्यर्हितजनोपचारैर्गानवादनपानखादनविमर्देन निर्भरीभूते समस्ते कुशावर्त्तपुरे परिणीता कनकशेखरेण विमलानना मया रत्नवतीति, ततो विहितेपूचितकर्तव्येषु निवृत्ते विवाहमहानन्दे गते दिनत्रयेऽदृष्टपूर्वतया कुशावर्त्तस्यातिरमणीयतया तत्प्रदेशाना कुतूहलपरतया यौवनस्य समुत्पन्नतयाऽस्मासु विश्रम्भभावस्य गृहीत्वाऽस्मदनुज्ञा नगरावलोकनाय निर्गते भ्रमणिकया सपरिकरे विमलाननारत्नवत्यौ, ततोऽनेकाश्चर्यदर्शनेनानन्दपूरितहृदये सम्प्राप्ते ते

मारेण हिंसा, केवलमेतावदधुनाऽहं प्रार्थये—यथैषा कुमारस्य सततमनुरक्ता भवति, मयाऽभिहितं—कः पुनरेवमवनेऽस्या उपायो भवि-
ष्यति ?, वैश्वानरः प्राह—सापराधं निरपराधं वा प्राणिनं मारयता कुमारेण न मनागपि घना(घृणा)यितव्यं अयमस्याः स्वत्वनुरक्तीभवनोपायः,
मयाऽभिहितं—किमनयाऽत्यन्तमनुरक्तया भविष्यति ?, वैश्वानर प्राह—कुमार ! भद्रोऽपि महाप्रभावेयं, यतो मयाऽधिष्ठितः पुरुषोऽतिते-
जस्वितया परेषां केवलं त्रासमात्रं जनयति, अनया पुनर्हिंसयाऽत्यन्तमनुरक्तयाऽऽलिङ्गितमूर्तिर्महाप्रभावतया दर्शनमात्रादेव जीवितमपि
नाशयति, तस्मादभिमुखीकर्तव्येयं कुमारेण, मयाऽभिहितमेवं करोमि, वैश्वानरेणोक्तं—महाप्रसाद इति, ततो मार्गे गच्छताऽहं शशसूकर-
शरभशबरमारङ्गादीनामाटव्यजीवानां शतसहस्राणि मारयामि स्म ततः प्रहृष्टा हिंसा तथा मय्यनुकूला ततः कम्पन्ते मद्दर्शनेन
जीवा मुञ्चन्ति प्राणानपि केचित् तत संजातो मे वैश्वानरकथितहिंसाप्रभावे प्रत्ययः, प्राप्ता वयं कनकचूडविषयाभ्यर्णे, तत्रास्ति वि-
षमकूटो नाम पर्वतः, तस्मिंश्च कनकचूडमण्डलोपद्रवकारिणोऽम्बरीषनामानश्चरटाः प्रतिवसन्ति, ते च कदर्थिताः पूर्वं बहुशः कनकचूडेन,
ततः कनकोदरमागच्छन्तमवगम्य निरुद्धस्तैर्मार्गः, प्रत्यासन्नीभूतमस्मद्बलं, ततः कलकलं कुर्वन्त समुत्थिताश्चरटाः, समालग्नमायोधनं,
ततश्च—निपतितशरजालभिन्नकुम्भस्थलाभोगनिर्गच्छदच्छमुक्ताफलस्तोमसम्पूरिताशेषभूपीठदेशं क्षणात् तथाविदलितभटमस्तकास-
त्वराजीवघनानुकारेण रक्तौघनीरेण दुष्प्रापसच्छत्रसमावहृतेन तुल्यं तडागेन संजातमुच्चैर्महायुद्धमस्माकमिति, तत समुदीर्णतया चर-
टगम्य संजाताः परिमग्नप्राया कनकोदरादयः, अत्रान्तरे प्रवरसेनाभिधानेन चरटनायकेन सार्धं समापतितं ममायोधनमिति, ततः
संचितोऽहं वैश्वानरेण भक्षितं मया तत्क्रूरचित्ताभिधानं वटकं ततः प्रवृत्तो मेऽन्तस्तापः संजातो भृकुटितरङ्गभङ्गुरो ललाटपट्टः समा-
पित स्वेदबिन्दुनिकरेण शरीरं, स च प्रवरसेनोऽत्यन्तकुशलो धनुर्वेदे निर्व्यूढसाहसः करवालेऽतिनिपुणः सर्वास्त्रप्रयोगेषु गर्वोद्धुरो विद्या-

श्चितम् ॥ १ ॥ रचितप्रथितोरुसुहस्तिघट, घटनागतभीरुकृतार्तरवम् । रवपूरितभूधरविगिविवर, वरहेतिनिवारणखिन्ननृपम् ॥ २ ॥ नृपभिन्नमदोद्धुरवैरिगण, गणसिद्धनभश्चरघुष्टजयम् । जयलम्पटयोधशतैश्चटुल, चटुलाश्वसहस्रविमर्दकरम् ॥ ३ ॥ करसृष्टशरौघविदीर्णरथ, रथभग्नविवर्धितयोधबलम् । बलशालिभटेरितसिंहनद, नदभीषणरक्तनदीप्रवहम् ॥ ४ ॥ तत्रैवंरूपे प्रवृत्ते महारणे दृष्टः परैः कृतभीषणनादैः समरभर भग्नमद्बल समुल्लसितः परबले कलकलः केवल न चलिता मम पदमपि पराङ्मुख, त्रयोऽपि नायका समुत्कटतया निकटसरीभूता परे, अत्रान्तरे पुन सक्षितोऽहं वैश्वानरेण भक्षित मया क्रूरचित्ताभिधान वटक जातो मे भासुरतरः परिणामः ततः साक्षेपमाहूतो मया समरसेनो, चलितोऽसौ ममोपरि मुक्तमस्त्रवर्ष, केवल सन्निहिततया पुण्योदयस्य न प्रभवन्ति स्म तानि मे शस्त्राणि, ततो विलोकितोऽहं हिंसया जातो मे दारुणतरो भाव तत गृहीता मया परविदारणचतुरा शक्ति विदारित समरसेनो, गतः पञ्चत्व भग्न तद्बल चलितोऽहं द्रुमाभिमुख, स च लग्न एव योद्धु कनकचूडेन, ततो मयाऽभिहितो—रे ! किमत्र भवति हन्तव्ये तातेनायासितेन? न खलु गोमायुकेसरिणोरनुरूपमायोधन, ततस्त्वमारादागच्छेति, ततो चलितो ममाभिमुख द्रुमनरेन्द्रः, निरीक्षितोऽहं हिंसया, ततो दूरादेव निपातितमर्धचन्द्रेण मया तस्योत्तमाङ्ग, भग्न तदीयसैन्य, विहितो मयि सिद्धविद्याधरादिभिर्जयजयशब्दः, इतश्च कनकशेखरेणापि सहापतितो योद्धु विभाकर , शरवर्षच्छेदानन्तरं मुक्तानि तेन कनकशेखरस्योपरि आग्नेयपन्नगादीन्यस्त्राणि, निवारितानि वारुणगारुडादिभिः प्रतिशस्त्रैः कनकशेखरेण, ततोऽसिलतासहाय समवतीर्णं स्यन्दनाद्विभाकरः, कीदृश रथस्थस्य भूमिस्थेन सह युद्धमितिमत्वा कनकशेखरोऽपि स्थितो भूतले, ततो दर्शितानेककरणविन्याससमभिवाञ्छितमर्मप्रहारं प्रतिप्रहारवञ्चनासारं सजात द्वयोरपि बृहतीं वेलां चलकरवालयुद्धं, ततः समाहत्य स्कन्धदेशे पातित कनकशेखरेण विभाकरो भूतले गतो मूर्च्छा समुल्लसितः कनकशेखरबले

चूतचूचुक नामोद्याने, प्रवृत्ते क्रीडितु, यत्र तु कनकचूडराजास्थाने तदा विश्रामः, यावदकाण्ड एव प्रवृत्त कोलाहलः, पूत्कृत दासचेटीभिः, किमेतदिति संभ्रान्त तत्यितमास्थान, हृते विमलाननारत्नवत्यौ केनचिदिति प्रादुर्भूत प्रवादः, तत्र सत्वरमसद्बल, लग्न तदनुमार्गेण, ततो मार्गस्थितया परसैन्यस्य सोत्साहतयाऽस्मदनीकस्य स्तोकभूभाग एव समघट्टथा परस्परमूरुसत्वशालिन्या, श्रुतमस्माभि-र्विभाकरनाम वन्दिभिरुद्घुष्यमाण, ततः सर्वैरेव चिन्तितमस्माभि —अये! स एष कनकपुरनिवासी प्रभाकरवन्धुसुन्दर्योस्तनयो विमाकरो यस्मै प्रभावत्या दत्ता विमलानना पूर्वमासीदिति निवेदित दूतेन, ततश्चैषोऽस्मान् परिभूय हरत्येते सख्यौ दुष्टात्मेति भावयतो मे विहिता वैश्वानरेण संज्ञा ततो भक्षित मया क्रूरचित्ताभिधान वटक सञ्जातो भासुर परिणामः, ततो मयाऽभिहित—अरेरे पुरुषाधम विभाकर! परदारहरणतस्कर! क यासि? पुरुषो भव पुरुषो भवेति, ततस्तद्वाकर्ण्य गजाभयाद् इव त्रिभिः सोत्सोमुखैर्वलितमभिमुख परबले आविर्भूतास्तदधिष्ठायकास्त्रय एव नायका, ततो मया कनकचूडराजेन कनकशेखरेण च त्रिभिरपि योद्धुकामैर्यथासमुख भूतास्ते, इतश्च योऽसौ कन्यागमनसूचनार्थं कनकचूडराजसमीपे समागतः पूर्वमासीभन्दराजदूतः स तत्रावसरे मत्सकाशे वर्तते, ततोऽभिहितोऽसौ मया—अरे विकट! जानीषे त्व कतमा स्त्वेते त्रयो नायकाः?, विकट आह—देव! सुष्ठु जानामि, य एष वामपार्श्वेऽनीकस्य सम्मुखो भवतः एष कलिङ्गाधिपतिः समरसेनो नाम राजा, एतद्बलेनैव हि प्रारब्धमिदमनेन विभाकरेण, यो महाबलतया विभाकरपितुः प्रभा-करस्याय स्वामिभूतो वर्तते, यः पुनरेष मध्यमसैन्ये वर्ततेऽभिमुखः कनकचूडनरपते अयं विभाकरस्यैव मातुलो वङ्गाधिपतिर्द्रुमो नाम राजा, यस्त्वेष दक्षिणभागवर्तिनि बले नायकोऽभिमुखः कनकशेखरस्य, सोऽयं विभाकर एव, यावदेव कथयति विकटः तावत्समाल-प्रमायोधन, तच्च कीदृशम्—शरजालतिरस्कृतदृष्टिपथ, पयरोधसमाकुलतीव्रभटम्। भटकोटिविपाटितकुम्भतटं, तटविभ्रमहस्तिशरीर-

चितम् ॥ १ ॥ रचितप्रथितोरुसुहस्तिघट, घटनागतभीरुकुसार्वरवम् । रवपूरितभूधरविग्विवरं, वरहेतिनिवारणखिन्ननृपम् ॥ २ ॥ नृप
भिन्नमदोद्धुरवैरिगण, गणसिद्धनभश्चरघुष्टजयम् । जयलम्पटयोधशतैश्चदुलं, चदुलाश्वसहस्रविमर्दकरम् ॥ ३ ॥ करसृष्टशरौघविदीर्णरथ,
रथभङ्गविवर्धितबोलबलम् । बलशालिभटेरितसिंहनद, नदभीषणरक्तनदीप्रवहम् ॥ ४ ॥ ततश्चेदृशे प्रवृत्ते महारणे दृष्ट परैः कृतभीषण-
नादैः समरभरः भग्नमस्मद्बल समुल्लसितः परबले कलकलः केवल न चलिता वय पदमपि पराङ्मुख, त्रयोऽपि नायका समुत्कटतया
निकटतरीभूताः परे, अत्रान्तरे पुन सन्निवोऽह वैश्वानरेण भक्षित मया क्रूरचित्ताभिधान वटक जातो मे भासुरतरः परिणाम ततः
साक्षेपमाहूतो मया समरसेनो, चलितोऽसौ ममोपरि मुञ्चन्शरवर्ष, केवल सन्निहिततया पुण्योदयस्य न प्रभवन्ति स्म तानि मे शस्त्राणि,
ततो विलोकितोऽह हिंसया जातो मे दारुणतरो भावः तत प्रहिता मया परविदारणचतुरा शक्ति विदारित समरसेनो, गतः प-
ञ्चत्व मम सद्बल चलितोऽह द्रुमाभिमुख, स च लग्न एव योद्धु कनकचूडेन, ततो मयाऽभिहितो—रे ! किमत्र भवति हन्तव्ये तातेना-
यासितेन?, न खलु गोमायुकेसरिणोरनुरूपमायोधन, ततस्त्वमारादागच्छेति, ततो वलितो ममाभिमुख द्रुमनरेन्द्र, निरीक्षितोऽह हिंसया,
ततो दूरादेव निपातितमर्धचन्द्रेण मया तस्योत्तमाङ्ग, भग्न तदीयसैन्य, विहितो मयि सिद्धविद्याधरादिभिर्जयजयशब्दः, इतश्च कनकशे-
खरेणापि सह्यापतितो योद्धु विभाकरः, शरवर्षच्छेदानन्तरं मुक्तानि तेन कनकशेखरस्योपरि आग्नेयपन्नगादीन्यस्त्राणि, निवारितानि वारु
णगारुडादिभिः प्रतिशस्त्रैः कनकशेखरेण, ततोऽसिलतासहायः समवतीर्णः स्यन्दनाद्विभाकर, कीदृश रथस्थस्य भूमिस्थेन सह युद्धमि
तिमत्वा कनकशेखरोऽपि स्थितो भूतले, ततो दर्शितानेककरणविन्यासमभिवाञ्छितमर्मप्रहारं प्रतिप्रहारवञ्चनासारं संजात द्वयोरपि महती
वेला खड्गयुद्ध, ततः समाहत्य स्कन्धदेशे पातित कनकशेखरेण विभाकरो भूतले गतो मूर्च्छां समुल्लसितः कनकशेखरबले

चूतचूचुक नामोद्यान, अथवा कीदृशं, वयं तु कनकचूडराजास्थाने वृथा विश्रामः, यावदकाण्ड एव प्रवृत्त कोलाहलः, पूत्कृत दासचेटीभिः, किमेतदिति ससम्भ्रान्त उत्थितमास्थान, हृते विमलाननारत्नवत्यौ केनचिदिति प्रादुर्भूत प्रवादः, ततः ससम्भ्रमसद्गल, लग्न तदनुमार्गेण, ततो मार्गस्थितया परसैन्यस्य सोत्साहतयाऽस्मदनीकस्य स्तोकभूभाग एव समवष्टब्धा परपभूरसमस्पतािकन्या, श्रुतमस्माभिर्विभाकरनाम वन्दिभिरुद्घुष्यमाणं, ततः सर्वैरेव चिन्तितमस्माभि —अये! स एष कनकपुरनिवासी प्रभाकरचन्द्रसुन्दर्योस्तनयो विभाकरो यस्मै प्रभावत्या दत्ता विमलानना पूर्वमासीदिति निवेदित दूतेन, ततश्चैषोऽस्मान् परिभूय हरत्येते वध्वौ दुष्टात्मेति भावयतो मे विहिता वैश्वानरेण सखा ततो भक्षित मया क्रूरचित्ताभिधान वटक सजातो भासुरः परिणामः, ततो मयाऽभिहित—अरेरे पुरुषाधम विभाकर! परदारहरणतस्कर! क यासि? पुरुषो भव पुरुषो भवेति, ततस्तदाकर्ण्य गङ्गाप्रवाह इव त्रिभिः स्रोतोमुखैर्वलितमभिमुख परबलं प्रादुर्भूतास्त्रयोऽपि प्रायकास्त्रय एव नायकाः, ततो मया कनकचूडराजेन कनककेसरेण च त्रिभिरपि योद्धुकामैर्यथासमुख धृतास्ते, इतश्च योऽसौ कन्यागमनसूचनार्थं कनकचूडराजसमीपे समागतः पूर्वमासीत्सन्धिराजदूत स तत्रावसरे मत्सकाशे वर्तते, ततोऽभिहितोऽसौ मया—अरे विकट! जानीषे त्वं कतमाः खल्वेते त्रयो नायका ?, विकटः प्राह—देव! सुष्ठु जानामि, य एष वामपार्श्वेऽनीकस्य सम्मुखो भवतः एष कलिङ्गाधिपतिः समरसेनो नाम राजा, एतद्बलेनैव हि प्रारब्धमिदमनेन विभाकरेण, यतो महाबलतया विभाकरपितुः प्रभाकरस्याप स्वामिभूतो वर्तते, यः पुनरेष मध्यमसैन्ये वर्ततेऽभिमुख कनकचूडनरपतेः अयं विभाकरस्यैव मातुलो वङ्गाधिपतिर्द्रुमो नाम राजा, यस्त्वेष दक्षिणभागवर्तिनि बले नायकोऽभिमुख कनककेसरस्य, सोऽयं विभाकर एव, यावदेव कथयति विकट तावत्समालग्नमायोधनं, तच्च कीदृशम्—शरजालतिरस्कृतदृष्टिपथ, पयरोधसमाकुलसीप्रभटम् । भटकोटिविपाटितकुम्भतटं, तटविभ्रमहस्तिशरीर-

चर ॥ ११ ॥ तथापि प्रियया नूनं, ममेदं हन्त हिंसया । सर्वं संपादितं मन्ये, कृतमालोकनं यया ॥ १२ ॥ अहो प्रभावो हिंसाया, अहो मय्यनुरक्तता। अहो कल्याणकारित्वमहो सर्वगुणाढ्यता ॥ १३ ॥ यादृशी वर्णिता पूर्वं, वरमित्रेण मे प्रिया । एषा वैश्वानरेणोक्ते-स्तादृश्येव न संशयः ॥ १४ ॥ तस्यागृहीतसङ्केते¹, वृत्तान्तस्यात्र कारणम् । स मे पुण्योदयो नाम, वयस्यः परमार्थतः ॥ १५ ॥ केवलम्—तदा न लक्षयाम्येवमहं पापहतात्मकः । यथा पुण्योदयाज्जातं, ममेदं सर्वमञ्जसा ॥ १६ ॥ ततश्च—एवंविधविकल्पेनाहं वैश्वानरहिंसयोः । अत्यन्तमनुरक्तात्मा, न जानामि स किंचन ॥ १७ ॥ इतश्च हट्टमार्गेण, मामकीनरथस्तदा । प्राप्तो राजकुलाभ्यर्णे, कृतलोकचमत्कृतिः ॥१८॥ अथास्ति सु(प्र)भ्रनायस्य, दुहिता जयवर्मणः । प्रिया कनकचूडस्य, देवी मलयमञ्जरी ॥१९॥ तस्याश्च भुवनाभोगसर्वसौन्दर्यमन्दिरम् । अस्ति मन्मथमञ्जूषा, कन्या कनकमञ्जरी ॥ २० ॥ सा स्यन्दनस्थं गच्छन्तं, वातायनसुसंस्थिता । मां दृष्ट्वा पञ्चबाणस्य, शरगोचरमागता ॥ २१ ॥ कुतूहलवशेनाथ, वीक्षमाणेन सर्वतः । गवाक्षे लीलया दृष्टिर्मया तत्र निपातिता ॥ २२ ॥ ततः कनकमञ्जर्या, लोललोचनमीलिता । क्षणं सा मामिका दृष्टिश्चलति स न कीलिता ॥ २३ ॥ सापि सा मामिका दृष्टिं, पिबन्ती स्तिमितेक्षणा । स्वेदकम्पनरोमाञ्चैर्व्यक्तकामा क्षणं स्थिता ॥ २४ ॥ मम तस्याश्च सानन्दं, दृष्टिसंयोगदीपितम् । मदीयसारथिर्भावं, तेतलिस्तम लक्षयत् ॥ २५ ॥ ततश्चिन्तितं तेतलिना—अये¹ रतिमकरकेतनयोरिवातिसुन्दरोऽयमनयोरनुरागविशेषः, केवलं महाजनसमक्षमेवमनिमेषाक्षतया निरीक्षमाणस्यैनां हीनसत्त्वतया लाघवमस्य संपत्स्यते रभसत्वाच्च कदाचिदीर्ष्या संपद्येत ततो न मे युक्तमुपेक्षितुमिति तत काकलीं कृत्वा चोदितस्तेतलिना स्यन्दनः, ततोऽहं लावण्यामृतपङ्कमग्नामिव कपोलपुलककण्टकलग्नामिव मदनशरशलाकाकीलितामिव तदीयसौभाग्यगुणस्यूतामिव कनकमञ्जरीवदनकमलावलोकनात् कथंचिद्दृष्टिमाकृष्य तस्यामेव निक्षिप्तहृदयः प्राप्तः क्रमेण निजमन्दिरं, तत्र च

हृष्टकण्ठः, ततो निवार्य त वायुदानसलिलाभ्युक्षणादिभिराश्वासितो विभाकर कनकशेखरेण, अभिहितश्च—साधु भो नरेन्द्रतनय! साधु न मुक्तो भवता पुरुषकारः नाङ्गीकृतो दीनभावः समुज्ज्वालिता पूर्वपुरुषस्थितिः लेखितमात्मीय शशधरे नामक, तदुत्थाय पुनर्योद्धुमर्हति राजसूनुः, ततोऽहो अस्य महानुभावता अहो गम्भीरता अहो पुरुषातिरेकः अहो वचनातिरेकः इति चिन्तयता विभाकरेणाभिहित—भाय! अलमिदानीं युद्धेन, निर्जितोऽहं भवता न केवल खड्गेन, किं तर्हि? चरितेनापि, तत परमबन्धुवत् स्वय निरीक्षितो विभाकर' स्वकीयस्यन्दने कनकशेखरेण समारोपितो मधुरवचनै उपसहृतमायोधन, गत पराविभाग सर्वमपि परसैन्य कनकशेखरस्य, दृष्टे भयातिरेकप्रकम्पमानगात्रयष्टी विमलाननारत्नवत्यौ, समानन्दिते पेशलवाक्यैः, स्थापिते निजभर्तृस्यन्दनयोः कनकचूडेन, ततो लब्धजयतया हर्षपरिपूर्णा वय कुशावर्त्तपुरे प्रवेष्टुमारब्धाः, कथम्?, पुरतः कुञ्जरारूढो, राजा देवेन्द्रसन्निभः । ददान यथाकाम, प्रविष्टो निजमन्दिरे ॥ १ ॥ तत्र प्रमुदिताशेषलोकलोचनवीक्षितः । पुरं प्रविश्य स्वे गेहे, गत कनकशेखरः ॥ २ ॥ ततो रत्नवतीयुक्तः, स्यन्दनस्थ शनैः शनैः । यावद्गच्छामि तत्राहं, निजावासकसम्मुखम ॥ ३ ॥ तावत्ते समुल्लापाः, प्रवृत्ताः पुरयोषिताम् । जयश्रिया परीताङ्गे, मयि सस्पृहचेतसाम् ॥ ४ ॥ जगत्प्रतिमल्लोऽपि, येनासौ विनिपातितः । द्रुम समरसेनश्च, स सोऽय नन्दिवर्धन ॥ ५ ॥ अहो धैर्यमहो वीर्यमहो दाक्ष्यमहो गुणाः । अस्य नून न मर्त्योऽय, देवोऽय नन्दिवर्धनः ॥ ६ ॥ इय रत्नवती धन्या, याऽस्य भार्या महात्मन । धन्या वयमपि द्येप, यासां दृष्टिपथ गतः ॥ ७ ॥ अथवा सर्वमेवेदमहो धन्यतम पुरम् । अचिन्त्यसाहसाढ्येन, यदनेन विभूषितम् ॥८॥ तत्सलाम्नादशीर्षाघः, शृण्वतो मम मानसे । महामोहात्समुत्पन्नो, वितर्कोऽयमभूद्भृशम् ॥ ९ ॥ ममायमीदृशो लोके, प्रवादोऽत्यन्तदुर्लभः । यः सजातो महानन्दहेतुरप्रतिकारकः ॥ १० ॥ तस्या(त्रा)स्य कारण तावद्यस्मो हितकारकः । एष वैश्वानरोऽस्त्येव, नात्र सन्देहगो-

ततो मया चिन्तितं—अहो अस्य मयि भक्तिप्रकर्षः अहो वचनकौशलं, युज्यत एवास्मै सद्भावः कथयितुं, तथापि वामशीलतया मदन-विकारस्य मयाऽभिहितं—भद्र तेतले ! न जाने किमत्र कारणं ? केवलं यतः प्रभृति हट्टमार्गमतिक्रम्य समानीतस्त्वया रथो राजकुलाभ्यर्णे धारितश्चात्र कियन्तमपि क्षणं तदारात्सर्वाणि मे विलीयन्तेऽङ्गानि प्रवर्धतेऽन्तस्तापः ज्वलतीव भुवनं न सुखायन्ते जनोल्लापा आवि-र्भवति रणरणकः समुन्मूलालीकचिन्ता शून्यमिव हृदयं ततोऽहमस्य दुःखस्याऽलब्धपरित्राणोपायः खल्वेव स्थित इति, ततः सहर्षेण तेत-लिनाऽभिहितं—देव ! यद्येवं ततो विज्ञातं मयाऽस्य दुःखस्य निदानमौषधं च, न विषादः कर्तव्यो देवेन, मयाऽभिहितं—कथं ?, तेतलिः प्राह—समाकर्णय, निदानं तावदस्य दुःखस्य चक्षुर्दोषः, मयोक्तं—कस्य सम्बन्धी ?, तेतलिः प्राह—न जाने किमसौ लक्षिता न वा दे-वेन ?, मया पुनर्मुहूर्तां वेलां निरूपिता तत्र राजकुलपर्यन्तवर्तिनि प्रासादे वर्तमाना काचिद् वृद्धदारिका देवमर्धतिरश्चीनेनेक्षणयुगलेन साभि-निवेशमप्रत्यक्षन्तो निरूपयन्ती, तन्निश्चितमेवतस्या एव सम्बन्धी चक्षुर्दोषोऽयं, यतो देव ! अतिविषमा विषमशीलानां दृष्टिर्भवति, ततो मया चिन्तितं—वष्टः खल्वेष तेतलिः मुग्धोऽनेन मदीयभावः विलोकिता सा चिरमनेन अतः पुण्यवानयं, यतश्च वदत्येष यथा लब्धं मया तदास्य दुःखस्य भेषजमिति तत् संपादयिष्यति नूनं तां मदनज्वरहरणमूलिकां कन्यकामेष मे, तस्मात्प्राणनाथो ममायं वर्तत इति विचिन्त्य समारोपितो बलात्पर्यङ्के तेतलिः, अभिहितश्च—साधु भो ! साधु सुष्ठु विज्ञातं भवता मदीयरोगनिदानं इदानीमौषधमस्य नि-वेदयतु भद्रः, तेतलिनाऽभिहितं—देव ! इदमत्र चक्षुर्दोषे भेषजं, यदुत—निपुणवृद्धनारीभिः कार्यतां सम्यग् लवणावतारणकं विधीयतां मन्त्रकुशलैरपमार्जनं लिख्यन्तां रक्षाः निषध्यन्तां कण्ठकानि अनुशील्यन्तां भूतिकर्माणि, अन्यथा—शाकिन्यपि किल प्रत्युच्चारिता न प्रभवतीति कृत्वा गत्वा निष्ठुरवचनैर्गाढं निर्भर्त्स्यतां सा दारिका यदुत—हे वामलोचने ! निरीक्षितस्त्वया विषमदृष्ट्या देवः ततस्त्वं ज्ञाता

शून्यमनस्को विधाय दिवसोचितं कर्तव्यमारूढोऽभ्युपरितनभूमिकायां, ततः प्रस्थाप्य समस्तपरिजनमेकाकी निषण्णः शय्यायां, तस्यां पारापरैः कलकलतरङ्गोत्तरैर्वितर्ककल्लोलैर्विधुरितचेतोवृत्तिर्न जानामि आहं यदुत—किमागतोऽस्मि ? किं गतोऽस्मि ? किं तत्रैव स्थितोऽस्मि ? किमेककोऽस्मि ? किं परिजनवृतोऽस्मि ? किं सुप्तोऽस्मि ? किं वा जागर्मि ? किं रोदिमि ? किं वा न रोदिमि ? किं दुःखमिदं ? किं वा सुखमिदं ? किमुत्कण्ठकोऽयं ? किं वा व्याधिरयं ? किमुत्सवोऽयं ? किं वा व्यसनमिदं ? किं दिनमिदं ? किं वा रजनीयं ? किं मृतोऽस्मि ? किं वा जीवामीति, कथंचिदुपलब्धचेतनः पुनश्चिन्तयामि—अये ! क्व गच्छामि ? किं करोमि ? किं शृणोमि ? किं पश्यामि ? किमालपामि ? कस्य कथयामि ? कोऽस्य मे दुःखस्य प्रतीकारो भविष्यतीति, एवं च पर्याकुलचेतसो निषिद्धाशेषपरिजनस्यापरापरपार्श्वेन शरीरं परावर्तयतो महानारकस्येव तीव्रदुःखेनालब्धनिद्रस्यैव लङ्घिता सा रजनी समुद्गतोऽंशुमाली गतश्चैव स्थितो मेऽर्धप्रहरः, अत्रान्तरे ममागतस्तेतलिः प्रतिषिद्धतया मे न वारितः केनापि प्राप्तो मत्समीपं कृतप्रणामेन पादपतनं निषण्णो भूतले, विरचितकरमुकुलेन चाभिहितमनेन—देव ! नीचजनसुलभेन चापलेन किंचिद्देवं विज्ञापयिष्यामि यद्यार्यचारु वा सोढुमर्हति देवः, मयाऽभिहितं—भद्र तेतले ! विस्रब्धं वद किमियता पूर्वशोभया ?, तेतलिनाऽभिहितं—यद्येवं ततो मया देव ! परिजनादाकर्णितं यथा रथाश्वतीर्थे देवो न ज्ञायते किमत्र कारणं सोद्वेग इव निषिद्धाशेषपरिजनः सचिन्तः शयनीये विवर्तमानस्तिष्ठति ?, इतश्च स्यन्दनाश्वानां वार्तां कारयतो लङ्घितोऽतीतदिनशेषः, ततो रात्रौ समुत्पन्ना मे चिन्ता यदुत—किं पुनर्देवस्योद्वेगकारणं भविष्यति ?, ततस्तदुत्कण्ठयतश्चिन्ताविधुरस्य जाग्रत एव मे विभाता रजनी, ततो यावदुत्थाय किलेहागच्छामि तावदुत्तमं प्रयोजनान्तरमापतितं तेनातिवाहितेयतीं वेलामहमागत इत्यतो निवेदयतु देवः प्रसादेन शरीरकुशलवार्तामात्रायत्तजीविताय किंकरापसदायास्मै जनाय यदस्य व्यतिकरस्य कारणमिति ब्रुवाणः पतितो मच्चरणयोस्तेतलिः,

ततो मया चिन्तितं—अहो अस्य मयि भक्तिप्रकर्षः अहो वचनकौशलं, युज्यते एतस्मै सद्भावं कथयितुं, तथापि वामशीलतया मदन-
विकारस्य मयाऽभिहितं—भद्र तेतले! न जाने किमत्र कारणं? केवलं यतः प्रभृति हट्टमार्गमतिक्रम्य समानीतस्त्वया रथो राजकुलाभ्यर्णे
धारितश्चात्र कियन्तमपि क्षणं तदारभ्य सर्वाणि मे विलीयन्तेऽङ्गानि प्रवर्धतेऽन्तस्तापः स्वच्छन्दमिव भुवनं न सुखायन्ते जनोक्तयः आवि-
र्भवति रणरणकः समुत्सुकीकरोति चिन्ता शून्यमिव हृदयं ततोऽहमस्य दुःखस्यालब्धपरित्राणोपायः खल्वेव स्थित इति, ततः सहर्षेण तेत-
लिनाऽभिहितं—देव! यद्येवं ततो विज्ञातं मयाऽस्य दुःखस्य निदानमौषधं च, न विषादः कर्तव्यो देवेन, मयाऽभिहितं—कथं?, तेतलिः
प्राह—समाकर्णय, निदानं तावदस्य दुःखस्य चक्षुर्दोषः, मयोक्तं—कस्य सम्बन्धी?, तेतलिः प्राह—न जाने किमसौ लक्षितो न वा दे-
वेन?, मया पुनर्बृहती वेला निरूपिता तत्र राजकुलपर्यन्तवर्तिनि प्रासादे वर्तमाना काचिद् वृद्धदारिका देवमर्धतिरश्चीनेनेक्षणयुगलेन साभि-
निवेशमनवरतं निरूपयन्ती, तन्निश्चितमेव तस्या एव सम्बन्धी चक्षुर्दोषोऽयं, यतो देव! अतिविषमा विषमशीलानां दृष्टिर्भवति, ततो
मया चिन्तितं—चतुरः खल्वेष तेतलिः युक्तोऽनेन मदीयभावः विलोकिता सा चिरमनेन अत एव युज्यतेऽनर्थं, यतश्च भवत्येव यथा लब्धं
मया तत्रास्य दुःखस्य भेषजमिति ततः सम्पादयिष्यति नूनं तां मदनज्वरहरणमूलिकां कन्यकामेष मे, तस्मात्प्राणनाथो ममायं वर्तत इति
विचिन्त्य समारोपितो बलात्पर्यङ्के तेतलिः, अभिहितश्च—साधु भोः! साधु सुष्ठु विज्ञातं भवता मदीयरोगनिदानं इदानीमौषधमस्य नि-
वेदयतु भद्रः, तेतलिनाऽभिहितं—देव! इदमत्र चक्षुर्दोषे भेषजं, यदुत—निपुणवृद्धनारीभिः कार्यतां सम्यग् लवणावतारणकं विधीयतां
सर्षपकुलालैरपमार्जनं लिख्यन्तां रक्षाः निबध्यन्तां कण्डकानि अनुशील्यन्तां भूतिकर्माणि, अन्यच्च—शाकिन्यपि किल प्रत्युच्चारिता न
प्रभवतीति कृत्वा गत्वा निष्ठुरवचनैर्गाढं निर्भर्त्स्यतां सा दारिका यदुत—हे वामलोचने! निरीक्षितस्त्वया विषमदृष्ट्या देवः ततस्त्वं ज्ञाता

पुत्रा तिष्ठसि यदि च देवस्य शरीरे मनागपि स्खलितं भविष्यति ततो नास्ति मे(ते) जीवितमिति, एवं क्रियमाणे देव! नियमादुपशाम्यत्येष प्रभुरोषः, तदिदमस्य भेषजं मया विज्ञातमिति, ततो विहस्य मयाऽभिहितं—भद्र तेतले! पर्याप्तं परिहासेन, निवेद्यतां यदवधारितः कश्चिद्रूपता निश्चित(श्चो)मदुःखविगमोपायः?, तेतलि प्राह—देव! किमलब्धदेयवु सप्रतीकारा एव देवपादोपजीविनः कदाचिदपि देवस्य पुरतः सोद्वेगे सति देवे सदर्पं जल्पितुमुत्सहन्ते?, तस्मान्मा कुरुत विषादं सिद्धमेव देवसमीहितं, मया हि देवोद्वेगनिरासार्थमेवैष परिहासो विहितः, मयाऽभिहितं—वर्णय तर्हि कथं सिद्धमस्मत्समीहितम्?, तेतलि प्राह—देव! विज्ञापितमिदमादावेव मया यथा मम प्रत्युषस्येव देवसमीपमागच्छतो गृहतमं प्रयोजनान्तरमापतितं तेन लक्षितो ममायं विनार्थमहर इति, तद्देवसमीहितसिद्ध्यर्थमेव प्रयोजनान्तरं, कथमन्यथा गृहधर्मत्वमस्योपपद्येत?, यतोऽस्ति मम परिचिता मलयमञ्जरीसम्बन्धिनी कपिञ्जला नाम वृद्धगणिका, सा मम शयनादुत्थितः पुरतः प्रविश्य मत्सदने वयस्य! त्रायध्वं त्रायध्वमिति महता शब्देन पूत्कृतवती, ततोऽनुपलब्धभयकारणेन मयाऽभिहितं—भद्रे! कपिञ्जले कुतस्ते भय?, मयाऽभिहितं—मीनकेतनादिति, मयाऽभिहितं—कपिञ्जले! अश्रद्धेयमिदं, यतोऽहमेव तर्कयामि यदुत—कुङ्कुमरागपिङ्गलपलितचिताज्वालावलीभासुरं कटकटायमानास्थिपञ्जरशियाशब्दभैरवं सकुञ्चितवलीतिलकजालपिच्छलतातिभीषणं उदम्यितरावाकारलम्बमानातिस्थूलस्तनभयानकं अतिरौद्रमहाश्मशानविभ्रमं त्वदीयशरीरमिदमुपलभ्य नूनं कामं कातरनर इवाराटीं दत्त्वा दूरतः प्रपलायते ततः कुतस्ते भयमिति?, कपिञ्जलयाऽभिहितं—अयि! अलीकदुर्विदग्ध! न लक्षितस्त्वया मदीयोऽभिप्रायः तेनैव प्रजल्पसि, अतः समाकर्णय यथा मे मदनाद्भयमिति, मयाऽभिहितं—तर्हि निवेदयतु भवती, सा प्राह—अस्ति तावदिहैव भवतो मलयमञ्जरी नाम मम स्वामिनी तस्याश्चास्ति कनकमञ्जरी नाम दुहिता, अत्रान्तरे तेतलिना कनकमञ्जरीनामग्रहणादेव स्पन्दितं मे दक्षि-

मलोचनेन स्फुरितमधरेण उच्छ्वसितं हृदयेन रोमाञ्चितमङ्गेन गतमिवोद्वेगेन, ततो मया चिन्तितं—नूनं सैषा मम हृदयदयिता कनकमञ्जरीत्युच्यते, सहर्षेण चाभिहितं—ततस्ततः, ततो लक्षितमदीयभावेन अहो प्रियनामोच्चारणमन्त्रसामर्थ्यमिति विचिन्त्य तेतलिनाऽनुसन्दधानेन कपिञ्जलावचनमिदमभिहितं—सा च मदीयस्तन्यपानेन सवर्धिता तेन मम सर्वस्वमिव शरीरमिव हृदयमिव जीवितमिव सा कनकमञ्जरी स्वरूपाद्व्यतिरेकिणी वर्तते अधुना पीड्यते सा वराकी मकरध्वजेन ततो यत्तस्या मीनकेतनाद्भयं तत्परमार्थतो ममैव भयमिति, तदिदमाकर्ण्य धा(बा)रयतस्तेतलेराकृष्य करवालमरेरे मन्मथहतक! मुञ्च मुञ्च मे प्रिया कनकमञ्जरीं पुरुषो वा भव दुरात्मन्! नास्त्यधुना ते जीवितमिति ब्रुवाणोऽहमुत्थितः शयनीयतलादावेगेन, तेतलिनाऽभिहितं—देव! अलमनेनावेगेन, न खलु सदये देवे कनकमञ्जर्या मदनहतकादन्यस्माद्वा सकाशाद्भयगन्धोऽपि, कथानकं चेदमतस्तच्छेषमप्याकर्णयतु देव, ततस्तद्वचनेनाहं पुनः प्रत्यागतचेतनो मनाग् विलक्षीभूतो निषण्णः शय्यातले, तेतलिः प्राह—ततो मयाऽभिहितं—भद्रे कपिञ्जले! किं पुनर्निमित्तमासाद्य तस्याः कनकमञ्जर्याः प्रभवति मदनहतक, कपिञ्जलयाऽभिहितं—आकर्णय, अस्ति तावदतीते दिने संपन्नं वधूहरणविधुर, समावो देवस्य कनकचूडस्य परैः सह महासमामः, ततो उच्छ्रितपताकेषु नगरं प्रविशत्सु कनककचूडकनकशेखरनन्दिवर्धनेषु कुतूहलवशेनाहं गेहाभिर्गत्य स्थिता हट्टमार्गे, प्रविष्टेषु गता स्वामिनी भवनं, आरूढा चोपरितनभूमिकायां, तत्र च वातायने वर्तमाना राजमार्गाभिमुखनि सारितवदनकमला निष्पन्दमन्दस्तिमितशून्यदृष्टिका चित्रविन्यस्तेव शैलघटितेव निष्पन्नयोगेव परमयोगिनी व्युपरताशेषाङ्गप्रत्यङ्गचलनचेष्टा दृष्टा मया कनकमञ्जरी, ततो हा किमेतदिति विचिन्त्य ससम्भ्रमं पुत्रि! कनकमञ्जरीति पुनः पुनस्तामहमाहूतवती न च दत्तं मे मन्दभाग्यायास्तया प्रत्युत्तरं, इतश्च तस्मिन्नवसरे तत्रासीत्कन्दलिका नाम दासदारिका, ततस्तां प्रति मयाऽभिहितं—भद्रे कन्दलिके! केन पुनर्हेतुना वत्साया

कनकमञ्जर्या इयमेवंविधाऽवस्था सञ्जातेति ?, कन्दलिकयाऽभिहितं—अम्ब ! न सम्यग् लक्षयामि, केवलं यत प्रभृति राजमार्गेऽवतीर्णो नन्दिवर्धनकुमारः पतितो दृष्टिगोचरे भर्तृदारिकायाः तत आरभ्येयं प्रमुदितेव लब्धवरेव अमृतसिक्तेव महाभ्युदयप्राप्तेव अनाख्येयं किमपि रसान्तरमनुभवन्ती मया दृष्टाऽऽसीत्, यदा त्वतीतोऽसौ दृष्टिगोचरात् तदेयमीदृशीमवस्थां प्राप्तेति, ततस्तदाकर्ण्य मरिष्यतीयमकृतप्रतीकारेति सचिन्त्य शोकविह्वलया विहितो मया हाहारवः, तदाकर्णनेन समागता मलयमञ्जरी, ततः सापि किमेतत्कपिञ्जले ! किमेतदिति वदन्ती निरीक्ष्य कनकमञ्जरीं विलपितुमारब्धा, ततो वृद्धतमतया दोहलस्य जननीवल्लभतया हृदयस्य सम्यक्सततया विनयस्य मनाक् मत्रावचेतना सपमा कनकमञ्जरी मोटितमनया शरीरकं प्रवृत्ता जृम्भितुं, ततस्तां स्वकीयोत्सङ्गे निधाय मलयमञ्जर्याऽभिहितं—वत्से ! कनकमञ्जरि ! किं ते शरीरके बाधते ?, कनकमञ्जर्याऽभिहितं—अम्ब ! नाहमन्यत्किञ्चिल्लक्षयामि केवलं दाहज्वरो मे शरीरं बाधते, ततो यावदाकुला वयं कुर्मस्तस्याः शरीरस्य मलयजरसेन सेचनं प्रेरयामः कर्पूरजलबिन्दुवर्षीणि तालवृन्तानि प्रयच्छामोऽङ्गे हिमसेकशीतला नवाभ्रीः (कापायीः) समर्पयामो मुहुर्मुहुः कर्पूरपूरितानि नागवल्लीदलवीटकानि समाचरामोऽन्यामप्यनेकाकारां शीतक्रियां तावद्गतोऽस्तपासरेश्वरः समुद्गतो निशीथिनीनाथः परिप्लावित विमलचन्द्रिकया नभस्तलं, ततो मयाऽभिहिता मलयमञ्जरी—स्वामिनि ! सघर्ममिव स्थानं भतः प्रकाशे निःसार्यतां राजदुहिता, तयाऽभिहितं—एवं क्रियतां, ततो हिमगिरिविशालशिलाविभ्रमे सुधाधवलप्रकाशहर्म्यतले कपञ्चिद्ध्रायमाणा नीता कनकमञ्जरी विरचितं सत्रातिशीतलनलिनीदलपल्लवशयनीयं, तत्र तां निवेश्य विहितानि भुजयुगले मृणालनालवलयानि स्थापितो वक्षस्थले सिन्दुवारहारः समुपनीताः स्पर्शनार्थं प्रक्षेपमात्रेण महासरोवरस्यापि स्त्यानभावसम्पादकाः शीतवीर्या महामणयः, लगति च तत्र प्रदेशे स्वत एव बलिनामपि रोमहर्षदन्तवीणासञ्जननो गन्धवाहनः, ततो मलयमञ्जर्याऽभिहितं—वत्से ! कन-

कमञ्जरि! किमपगताऽधुना भवत्या दाहज्वरबाधा, कनकमञ्जरी प्राह—नहि नहि अम्ब! प्रत्युताधुना मम मतिः यदुत—अनन्तगुणा सा वर्तते, यत प्रज्वलितखदिराङ्गारपुञ्जायते मां प्रत्येष शशधरहस्तक ज्वालाकलापायते चन्द्रिका विस्फुलिङ्गायते तारकानिकरः दहति मामेष नलिनीदलस्रस्तरः शोषयन्ति सिन्धुवारहारादयः, किं बहुना?, इदशरीरकमपि मेऽधुना पापाया दाहात्मकतया वह्निपिण्डायते, ततो दीर्घं निःश्वस्य मलयमञ्जर्याभिहितं—भद्रे कपिञ्जले! जानासि वत्सायाः किं पुनरीदृशदाहज्वरकारणं?, मया तु कर्णे स्थित्वा निवेदितं तस्याः खलु कन्दलिकावचनं, मलयमञ्जर्याभिहितं—यद्येवं तत किं पुनरत्र प्राप्तकालं?, अत्रान्तरे समुत्थितो राजमार्गे शब्दः यदुत—सिद्धमेवेदं प्रयोजनं, केवलं वेलाऽत्र विलम्बते, ततः सहर्षया मयाऽभिहितं—स्वामिनि! गृहीतः शब्दार्थः?, सा प्राह—बाढं गृहीतः, मयाऽभिहितं—यद्येवं तत सिद्धमेव वत्सायाः कनकमञ्जर्याः समीहितं स्पन्दते च मम वामलोचनं अतो नात्र सन्देहो विधेयः, मलयमञ्जरी प्राह—कोऽद्यापि सन्देहः?, सिध्यत्येवेदं, अत्रान्तरे कनकमञ्जर्या एव ज्येष्ठा भगिनी मणिमञ्जरी नाम, सा समारुह्य हर्म्यतलं सहर्षा निषण्णाऽस्मत्समीपे, मयाऽभिहितं—वत्से! मणिमञ्जरि! निर्दुःखसुखतया कठोरा त्वमसि, सा प्राह—कथं?, मयोक्तं—या त्वमेवमस्मासु विषादवतीषु सहर्षा दृश्यसे, मणिमञ्जर्याऽभिहितं—अम्ब किं क्रियतां? न शक्यते गोपयितुं महन्मे हर्षकारणं, मयोक्तं—आख्याहि वत्से! कीदृशमिति, मणिमञ्जर्योक्तं—गताऽहमासं तातसमीपे निवेशिता तातेन निजोत्सङ्गे, तदा च तातस्य कनकशेखरः पार्श्ववर्ती वर्तते, ततस्तं प्रति तातेनाभिहितं—पुत्र! येनानेन नन्दिवर्धनेन महाबलावपि तौ समरसेनद्रुमौ लीलया विनिपातितौ, स नैष सामान्यपुरुषः न चास्य सुकृतस्य वयं जीवितदानेनापि निष्क्रयं गच्छामः तदिदमत्र प्राप्तकालं—जीवितादपि वल्लभतरे ममैते मणिमञ्जरीकनकमञ्जर्यौ, दत्ता चेयं पूर्वमेवास्यैव महत्तमसहोदराय शीलवर्धनाय, इयं तु कनकमञ्जरी साम्प्रतमस्मै नन्दिवर्धनाय दीयतामिति,

"सत्य प्रतीतितः सिद्धं, प्रमाणेन प्रतिष्ठितम् । तथापि निह्नुते भद्र!, तदेष जनदारुणः ॥१९६॥ युग्मम् ॥ तथा—गृहिणो ललनाऽऽख्यम-
"र्द्धका भूतघातिन । असत्यस च पापिष्ठाः, सङ्कटोपमर्दे रता ॥ १९७ ॥ तथाऽन्ये पचने नित्यमासक्ताः पाचनेऽपि च । मद्यपा पर
"दारादिसेविनो मार्गदूषकाः ॥ १९८ ॥ तप्तायोगोलकाकारास्तथापि यतिरूपिण । ये तेषु कुरुते भद्र!, पात्रबुद्धिमय जने ॥ १९९ ॥
"त्रिभिर्विशेषकम् । सज्ज्ञानध्यानचारित्रतपोवीर्यपरायणाः । गुणरत्नधना धीरा, जङ्गमाः कल्पपादपाः ॥ २०० ॥ संसारसागरोत्तारकारिणो
"दानदायिनाम् । अचिन्त्यवस्तुयोहित्थतुल्या ये पारगामिनः ॥ २०१ ॥ तेषु निर्मलचित्तेषु, पुरुषेषु अज्ञातमनाम् । एषोऽपात्रधियं धत्ते,
"महामोहमहत्तम ॥ २०२ ॥ त्रिभिर्विशेषकम् । तथा—कौतुक कुहक मन्त्रमिन्द्रजाल रसक्रियाम् । निर्विषीकरण तन्त्रमन्तर्धान सविस्म-
"यम् ॥ २०३ ॥ औत्पातमान्तरिक्षं च, दिव्यमाङ्गं स्वरं तथा । लक्षण व्यञ्जन भौम, निमित्त च शुभाशुभम् ॥ २०४ ॥ उच्चाटन सवि-
"द्वेषमायुर्वेद सजातकम् । ज्योतिष गणित चूर्ण, योगलेपास्तथाविधाः ॥ २०५ ॥ ये चान्ये विस्मयकरा, विशेषा पापशास्त्रजाः । अन्ये
"भूतोपमर्दस्य, हेतवः शाठ्यकेतवः ॥ २०६ ॥ तानेव ये विजानन्ति, निःशङ्काश्च प्रयुञ्जते । न धर्मबाधा मन्यन्ते, शठा पापपरायणा
"॥ २०७ ॥ त एव गुणिनो धीरास्ते पूज्यास्ते मनस्विनः । त एव वीरास्ते लाभमाजिनस्ते मुनीश्वराः ॥ २०८ ॥ इत्येव निजवीर्येण,
"बहिरङ्गजनेऽमुना । मिथ्यादर्शनसञ्ज्ञेन, भद्र! पापाः प्रकाशिताः ॥ २०९ ॥ सप्तभिः कुलकम् । ये पुनर्मन्त्रतन्त्रादिवेदिनोऽप्यतिनि -
"स्पृहाः । नियुत्ता लोकयात्राया, धर्मातिक्रमभीरवः ॥ २१० ॥ मूकान्धाः परवृत्तान्ते, स्वगुणाभ्यासने रताः । असक्ता निजदेहेऽपि, किं
"पुनर्द्रविणादिके ? ॥ २११ ॥ कोपाहङ्कारलोभाद्यैर्दूरतः परिवर्जिता । तिष्ठन्ति शान्तव्यापारा, निरपेक्षास्तपोधना ॥ २१२ ॥ न वि-
"द्यादिकमाख्यान्ति, कुहकादि न कुर्वते । मन्त्रादीनानुतिष्ठन्ति, निमित्तं न प्रयुञ्जते ॥ २१३ ॥ लोकोपचारं नि शेष, परित्यज्य यथा-

"क्लिष्टकर्मकलातीता, निष्कलाश्च महाधियः ॥ १७७ ॥ क्षान्तक्रोधा गताटोपा, हास्यस्त्रीहेतिवर्जिताः । आकाशनिर्मला धीरा, भगवन्तः
"सदाशिवाः ॥ १७८ ॥ शापप्रसादनिर्मुक्तास्तथापि शिवदेवताः । त्रिकोटिशुद्धशास्त्रार्थदेशका परमेश्वराः ॥ १७९ ॥ ये पूज्या सर्वदेवाना,
"ये ध्येयाः सर्वयोगिनाम् । ये चाज्ञाकारणाराध्या, निर्द्वन्द्वफलदायिनः ॥ १८० ॥ ते मिथ्यादर्शनाख्येन, लोकेऽनेन स्ववीर्यतः । देवा
"प्रच्छादिता भद्र[1], न ज्ञायन्ते विशेषतः ॥ १८१ ॥ पञ्चभिः कुलकम् । तथा—हिरण्यदान गोदान, धरादान मुहुर्मुहु । स्नान पान च
"धूमस्य, पञ्चाग्नितपन तथा ॥ १८२ ॥ तर्पण चण्डिकादीनां, तीर्थान्तरनिपातनम् । यतेरेकगृहे पिण्डो, गीतवाद्ये महादर ॥ १८३ ॥
"वापीकूपतडागादिकारण च विशेषतः । यागे मन्त्रप्रयोगेण, मारण पशुसहतेः ॥ १८४ ॥ कियन्तो वा भणिष्यन्ते ?, भूतमर्दनहेतव ।
"रहिताः शुद्धभावेन, ये धर्माः केचिदीदृशाः ॥ १८५ ॥ सर्वेऽपि बलिनाऽनेन, मुग्धलोके प्रपञ्चतः । ते मिथ्यादर्शनाख्येन, भद्र! ज्ञेया
"प्रवर्तिता ॥१८६॥ पञ्चभिः कुलकम् ॥ क्षान्तिमार्दवसन्तोषशौचार्जवविमुक्तयः । तप संयमसत्यानि, ब्रह्मचर्यं शमो दम ॥१८७॥ अ-
"हिंसास्तेयसद्ध्यानवैराग्यगुरुभक्तयः । अप्रमादसदैकाग्र्यनैर्मल्यपरतादयः ॥ १८८॥ ये चान्ये चित्तनैर्मल्यकारिणोऽमृतसन्निभाः । सद्धर्मा
"जगदानन्दहेतवो भवसेतव ॥ १८९ ॥ तेषामेष प्रकृत्यैव, महामोहमहत्तमः । भवेत्प्रच्छादनो लोके, मिथ्यादर्शननामकः ॥ १९० ॥
"चतुर्भिः कलापकम् ॥ तथा—श्यामाकतण्डुलाकारस्तथा पञ्चधनु शतः । एको नित्यस्तथा व्यापी, सर्वस्य जगतो विभु ॥१९१॥ क्षणस
"न्तानरूपो वा, ललाटस्थो हृदि स्थित । आत्मेति ज्ञानमात्र वा, शून्य वा सचराचरम् ॥ १९२ ॥ पञ्चभूतविवर्तो वा, ब्रह्मोत्तममिति वाऽ-
"रिलम् । देवोत्तममिति वा ज्ञेयं, महेश्वरविनिर्मितम् ॥ १९३ ॥ प्रमाणबाधित तस्य, यदेवविधमञ्जसा । सद्बुद्धिं कुरुते तत्र, महामोहम-
"हत्तमः ॥१९४॥ चतुर्भिः कलापकम् ॥ जीवाजीवौ तथा पुण्यपापसवरनिर्जराः । आस्रवो बन्धमोक्षौ च, तत्त्वमेतनवात्मकम् ॥ १९५ ॥

ुत्पम् । स्वाध्यायध्यानयोगेषु, सकलचित्ता सदाऽऽसते ॥२१४॥ ते निर्गुणा अलोकज्ञा, विमूढा भोगवञ्चिता । अपमानहता दीना, शा-
नहीनाश्च कुकुटाः ॥ २१५ ॥ इत्येव निजवीर्येण, बहिरङ्गजनेऽमुना । ते मिथ्यादर्शनाख्येन, स्थापिता भद्र¹ साधव ॥२१६॥ सप्तमि
पुल्लकम् । तथा—उद्वाहन च कन्यानां, जनन पुत्रसहतेः । निपातन च शत्रूणा, कुटुम्बपरिपालनम् ॥ २१७ ॥ यदेवमादिक कर्म,
घोरससारकारणम् । तद्धर्म इति सस्थाप्य, दर्शित भवतारणम् ॥ २१८ ॥ युग्मम् । यः पुनर्ज्ञानचारित्रदर्शनाढ्यो विमुक्तये । मार्ग
"सर्वोऽपि सोऽनेन, लोपितो लोकवैरिणा ॥ २१९ ॥" ततश्च भद्र¹ यमुष्य, समासेन मयोदितम् । वीर्यं महत्त्वमस्यास्य, ब्रुवाणेन पुरा
रया ॥ २२० ॥—अदेवे देवसङ्कल्पमधर्मे धर्ममानिताम् । अतत्त्वे तत्त्वबुद्धिं च, करोत्येष जडात्मनाम् ॥ २२१ ॥ अपात्रे पात्रतारो-
समगुणेषु गुणग्रहम् । संसारहेतौ निर्वाणहेतुभाव करोत्ययम् ॥ २२२ ॥ तदिद लेशत सर्वं, भविवेन्य निवेदितम् । विस्तरेण पुनर्वीर्यं,
कोऽस्य वर्णयितुं क्षमः ? ॥ २२३ ॥ अन्यथाय निजे चित्ते, मन्यते भद्र¹ सर्वदा । मदोद्धत प्रकृत्यैव, महामोहमहत्तम ॥ २२४ ॥
निद्रिसमर पवार्यं, राज्यसर्वस्वनायक । महामोहनरेन्द्रेण, कृतः सर्वत्र वस्तुनि ॥ २२५ ॥ एव च स्थिते—विभम्यार्पितचित्ताय, मया-
ऽस्मै हितमुपके: । अन्यव्यापारशून्येन, कर्तव्य ननु सर्वदा ॥ २२६ ॥ ततश्च—मण्डपं चित्तविक्षेप, तृष्णानाम्नी च वेदिकाम् । गाढ
समारयत्येष, विपर्यासं च विष्टरम् ॥ २२७ ॥ समारितानि चानेन, यदेतानि बहिर्जने । कुर्वन्ति यदहं वच्मि, समाकर्णय साम्प्रतम्
॥ २२८ ॥—"यदुन्मत्तमहमकसभिमो भद्र¹ सर्वदा । जनो दोलायतेऽत्यर्थं, धर्मबुद्धया वराककः ॥ २२९ ॥ कथम् ?—करोति भैरवे
"पातं, याति मूढो महापथम् । शीतेन म्रियते माघे, कुर्वाणो जलगाहनम् ॥ २३० ॥ पञ्चाग्नितपने रक्तो, दह्यते तीव्रवह्निना । गवाक्ष-
"स्थावियन्त्रारुरास्फोटयति मस्तकम् ॥२३१॥ कुमारीमाहणादीनामतियानेन निर्धनः । सहते दुःखसङ्घात, मातृः पूतमलः किल ॥२३२॥

“॥ २७० ॥ ततस्तेषामपारेऽत्र, पतिताना भवोदधौ । निर्नष्टशिष्टचेष्टानां, 'पुनरुत्तरण कुत ? ॥ २७१ ॥ तदनेनापि रूपेण, मिथ्यादर्श-
“नसस्कृतम् । इद विजृम्भते भद्र !, विपर्यासास्यमासनम् ॥२७२॥ अन्यच्च—प्रशमानन्दरूपेषु, सारेषु नियमादिषु । यशेनास्य भवेद्भद्र !,
“दुःखबुद्धिर्जडात्मनाम् ॥ २७३ ॥ गत्वरेषु सुतुच्छेषु, दुःखरूपेषु देहिनाम् । भोगेषु सुखबुद्धिः स्यादासनस्यास्य तेजसा ॥ २७४ ॥
“तथैव भुवनस्यास्य, प्रधानोऽत्र महाबल । बहिरङ्गजनस्योच्चैः, सर्वानर्थविधायकः ॥ २७५ ॥” मया भद्र! समासेन, 'मिथ्यादर्शनना-
मकः । महामोहनरेन्द्रस्य, कथितस्ते महत्तमः ॥ २७६ ॥ ततः प्रकर्षोऽतुष्टात्मा, श्रुत्वा मातुलभाषितम् । उत्क्षिप्य दक्षिण पाणिं, स
प्रतीदमभाषत ॥ २७७ ॥—चारु चारु कृत माम !, यदेष कथितस्त्वया । या त्वेषाऽर्धासनेऽस्यैव, सा किंनाम्नी वराङ्गना ? ॥ २७८ ॥
विमर्शोऽवदद्देषाऽपि, समानबलसाहसा । अस्यैव भार्या विज्ञेया, कुदृष्टिर्नाम विश्रुता ॥ २७९ ॥ ये दृश्यन्ते विमार्गस्था, बहिरङ्गजने
सदा । भद्र! पाषण्डिन केचित्तेषामेषैव कारणम् ॥ २८० ॥ ते चामी नामभिर्भद्र !, वर्ण्यमाना मया स्फुटम् । ज्ञेया देवादिभेदेन,
विभिन्नाश्च परस्परम् ॥ २८१ ॥ तद्यथा—“शाक्यास्त्रैदण्डिकाः शैवा , गौतमाश्चरकास्तथा । सामानिकाः सामपरा, वेदधर्माश्च धार्मिका
“॥ २८२ ॥ आजीविकास्तथा शुद्धा, विद्युद्दन्ताश्च चुञ्चुणाः । माहेन्द्राश्चारिका धूमा, बद्धदेषाश्च खुक्खुकाः ॥ २८३ ॥ उल्काः पाशुपताः
“कौलाः, काणादाश्चर्मखण्डिकाः । सयोगिनस्तथोलूका, गोदेहा यज्ञतापसाः ॥ २८४ ॥ घोषपाशुपताश्चान्ये, कन्दच्छेदा दिगम्बरा ।
“कामर्दकाः कालमुखाः, पाणिलेहास्त्रिराशिकाः ॥ २८५ ॥ कापालिका क्रियावादा गोव्रता मृगचारिण । लोकायताः शङ्खधमाः, सिद्ध-
“वादाः कुलतपाः ॥ २८६ ॥ तापसा गिरिरोहाश्च, शुचयो राजपिण्डकाः । ससारमोचकाश्चान्ये, सर्वावस्थास्तथा परे ॥ २८७ ॥ अज्ञा-
“नवादिनो ज्ञेयास्तथा पाण्डुरभिक्षवः । कुमारव्रतिकाश्चान्ये, शरीररिपवस्तथा ॥ २८८ ॥ उत्कन्दाश्चाक्षमालाश्च, त्रपवो दृसितापसा ।

तापुत्रौ परस्परम् । एतावेव वशीकर्तुं, क्षमौ भद्र! जगत्त्रयम् ॥ ३०८ ॥ यावन्निमपत्येष, नरेन्द्रो रागकेसरी । बहिरङ्गजने तावत्कौतस्त्यः सुखसङ्गमः ? ॥ ३०९ ॥ यतोऽत्र भद्र! संसारसागरोदरवर्तिषु । बहिर्लोके पदार्थेषु, प्रीतिमुत्पादयत्यलम् ॥ ३१० ॥ सच्छिष्टपुण्यजन्येषु, सच्छिष्टेषु सरूपतः । सक्लेशजनकेष्वेव, सर्वत्रापि पृथग्जनम् ॥ ३११ ॥ अन्यच्च भद्र! पार्श्वस्थं, यदस्य पुरुषत्रयम् । एकममतिस्निग्धदेहं च प्रतिभाव्यते ॥ ३१२ ॥ एते हि निजवीर्येण, शरीरावविभेदिन । अनेन विहिता भद्र!, त्रयोऽप्यासमवयस्यका ॥ ३१३ ॥ अतत्त्वाभिनिवेशाख्यः, प्रथमोऽत्र नरोत्तमः । दृष्टिराग इति प्रोक्तः, स एवापरसूरिभिः ॥ ३१४ ॥ अय हि भद्र! तीर्थ्यानामात्मीयात्मीयदर्शने । करोति चेतसोऽत्यन्तमाग्रहमनिवर्तकम् ॥ ३१५ ॥ द्वितीयो भवपाताख्यः, पुरुषो भद्र! गीयते । अयमेवापरैः प्राज्ञैः, स्नेहराग इतीरित ॥ ३१६ ॥ अय तु कुरुते द्रव्यपुत्रस्वजनसन्ततौ । मूर्च्छातिरेकतो भद्र!, चेतसो गाढबन्धनम् ॥ ३१७ ॥ मभिव्यक्ताभिधानोऽय, तृतीयः पुरुषः किल । गीतो विषयरागाख्य, स एव मुनिपुङ्गवैः ॥ ३१८ ॥ अय तु भद्र! लोकेऽत्र, भ्रमभुद्रामलीलया । शब्दादिविषयग्रामे, लौल्यमुत्पादयत्यलम् ॥ ३१९ ॥ नरत्रयस्य सामर्थ्यादस्य भद्र! जगत्त्रयम् । आक्रान्तमेव मन्येऽहं, रागकेसरिणा पुनः ॥ ३२० ॥ सन्मार्गमत्तमातङ्गकुम्भनिर्भेदनक्षमः । स्ववीर्याक्रान्तभुवनः, सत्योऽत्र रागकेसरी ॥ ३२१ ॥ या त्वेषा दृश्यते भद्र!, निविष्टाऽस्यैव विष्टरे । अस्यैव भार्या सा ज्ञेया, मूढता लोकविश्रुता ॥ ३२२ ॥ ये केचिदस्य विद्यन्ते, गुणा भद्र! महीपते । तेऽस्यां सर्वे सुभार्यायां, विज्ञेयाः सुप्रतिष्ठिता ॥ ३२३ ॥ यत शरीरनिक्षिप्ता, पार्वतीमिव शङ्करः । एनामेष सदा राजा, धारयत्येष मूढताम् ॥ ३२४ ॥ ततश्च—अन्योऽन्यानुगतौ नित्यं, यथा देवस्तथाऽनयो । अविभक्ता विवर्तन्ते, गुणा अपि परस्परम् ॥ ३२५ ॥ यस्त्वेष वामके पार्श्वे, निविष्टोऽस्यैव भूपतेः । भद्र! द्वेषगजेन्द्रोऽसौ, प्रतीतः प्रायशस्त्वय ॥ ३२६ ॥ अत्रापि च महामोहनरेन्द्रस्य सुबो-

"चित्तदेषा चित्तावासास्तथा मैथुनचारिणः ॥२८९॥ अम्बरा असिधाराश्च, तथा माठरपुत्रका । चन्द्रोद्गमिका(क्या)श्चान्ये, तथैवोदकमृत्तिका "॥ २९० ॥ एकैकस्यालिका मक्षाः, पक्षापक्षा गजध्वजा, । उलूकपक्षा मात्राश्चिमक्ता कण्टकमर्दका ॥ २९१ ॥" कियन्तो माऽत्र ग ण्यन्ते ?, नानाभिप्रायसस्थिताः । पाषण्डिनो भवन्त्येते, भो ! नानाविधनामकाः ॥ २९२ ॥ देवैर्वेषैस्तथा वेषैः, कल्पैर्मोक्षविशुद्धिभिः । वृत्तिभिश्च भवन्त्येते, भिन्नरूपाः परस्परम् ॥ २९३ ॥ तथाहि—रुद्रेन्द्रचन्द्रनागेन्द्रबुद्धोपेन्द्रविनायका । निजाकूतवशादेवैरिष्टा देवाः पृथक् पृथक् ॥ २९४ ॥ ईश्वरो नियतिः कर्म, स्वभावः काल एव वा । जगत्कर्तेति वादोऽय, सर्वेषा भिन्नरूपक ॥ २९५ ॥ त्रिदण्ड-कुण्डिकामुण्डवल्कचीवरमेदत । वेषः परस्परं भिन्नः, स्फुट एषोपलक्ष्यते ॥ २९६ ॥ कल्पोऽपि भक्ष्याभक्ष्यादिलक्षण स्वधिया किल । मन्योऽन्य भिन्न एवैषां, तीर्थिनां भद्र ! वर्तते ॥ २९७ ॥ विध्यातदीपरूपाम , सुखदुःखविवर्जितः । एषा पाषण्डिनां भद्र !, मोक्षो भिन्न परस्परम् ॥ २९८ ॥ निजाकूतवशेनैव, विशुद्धिरपि तीर्थिकैः । अमीभिर्भद्र ! सत्त्वाना, भिन्नरूपा निवेदिता ॥ २९९ ॥ कन्दमूलफलाहाराः, केचिद्धान्याशिनोऽपरे । वृत्तितोऽपि विभिद्यन्ते, वदस्ते भद्र ! तीर्थिकाः ॥ ३०० ॥ एव च स्थिते—अमी वराकाः सर्वेऽपि, शोचयन्ते भवोदधौ । अस्या कुदृष्टेर्वीर्येण, शुद्धधर्मबहिष्कृता ॥३०१॥ तत्त्वमार्गमजानन्तो, विवदन्ते परस्परम् । स्वाग्रहं नैव मुञ्चन्ति, रुष्यन्ति हितभाषिणे ॥३०२॥ सर्वेषा भुवनख्याता, मिथ्यादर्शनवत्सला । कुदृष्टिर्विलसत्येव, बहिरङ्गजनाहिता ॥ ३०३ ॥ यस्त्वेष विष्टरे शुभ्रे, निविष्टः प्रविलोक्यते । प्रसिद्ध एव भद्रस्य, स नून रागकेसरी ॥ ३०४ ॥ एन राज्ये निधायोच्चैर्महामोहनराधिप । गतचिन्ताभरो नून, कृतार्थो वर्ततेऽधुना ॥ ३०५ ॥ केवल दत्तराज्येऽपि, महामोहनरेश्वरे । सविशेष करोत्येष, विनय नयपण्डितः ॥ ३०६ ॥ महामोहनरेन्द्रोऽपि, सर्वेषाममतः स्फुटम् । अस्यैव भोः सुपुत्रस्य, प्रमुत्वं स्थापयत्यलम् ॥ ३०७ ॥ तदेवं मोहसम्बद्धौ, पि-

उल्लासितगृहच्छिद्रः, स एव सुरकानने । तद्भार्याक्षोभणे रक्तस्तयाऽनेन विनाटितः ॥ ३४६ ॥ उत्पाद्य सुरते तृष्णां, स एवानेन धारित । स्त्रिव्य वर्षसहस्र भो, रसस्य इति गीयते ॥ ३४७ ॥ अन्येऽपि बहवो लोके, मुनयो देवदानवाः । वशीकृत्य कृता सर्वे, भद्रानेनात्मकिङ्करा ॥ ३४८ ॥ कोऽस्य लङ्घयितुं शक्तो, नूनमाज्ञां जगत्त्रये ? । आत्मभूत महावीर्य, यस्येदं पुरुषत्रयम् ॥ ३४९ ॥ अयं हि प्रथमो भद्र[1], पुरुषोऽनघपौरुषः । नाम्ना विख्यातसद्वीर्यैः, पुवेद इति गीयते ॥ ३५० ॥ अमुष्य तात[1] वीर्येण, बहिरङ्गा मनुष्यकाः । पारदार्ये प्रवर्तन्ते, आयन्ते कुलदूषणाः ॥ ३५१ ॥ द्वितीय पुरुषो येष, स्त्रीवेद इति सूरिभिः । व्यावर्णितो महातेजा, व्याप्तसमुवनोदरः ॥३५२॥ अस्य धाम्ना तु नत्तात[1], योषितो विगतत्रपाः । विलङ्घ्य कुलमर्यादां, रज्यन्ते परपूरुषे ॥ ३५३ ॥ तृतीयः पुरुषो भद्र[1], पण्डवेद इति स्मृतः । येन सन्तप्यते लोको, बहिरङ्गः स्वतेजसा ॥ ३५४ ॥ माळप्यालमिव तावदस्य वीर्यविचेष्टितम् । अनिवेद्य जने येन, विगुप्यन्ते नपुंसकाः ॥ ३५५ ॥ एतन्नरत्रय भद्र[1], पुरस्कृत्य प्रवर्तते । अविज्ञातबलोऽन्येषां, नूनमेष जगत्त्रये ॥ ३५६ ॥ या त्वेषा पद्मपत्राक्षी, रूपसौन्दर्यमन्दिरम् । अस्यैव वल्लभा भार्या, रतिरेषाऽभिधीयते ॥ ३५७ ॥ येऽनेन निर्जिता लोका, नरवीर्यपुरःसरम् । तेषामेषा प्रकृत्यैव, सुखबुद्धिविधायिका ॥ ३५८ ॥ तथाहि—अस्य वीर्येण भो लोका, दुःखिताः परमार्थतः । तथापि तेऽस्तो मन्यन्ते, मकरध्वजनिर्जिताः ॥ ३५९ ॥ यदुत—आह्लादजनकोऽस्माकं, हितोऽयं मकरध्वजः । प्रतिकूलाः पुनर्येऽस्य, कुतस्तेषां सुखोद्भवः ? ॥ ३६० ॥ ततो रत्याऽनया भद्र[1], ते वशीकृतमानसाः । जाता निर्मिथ्यभावेन, मकरध्वजकिङ्कराः ॥ ३६१ ॥ तदादेशेन कुर्वन्ति, हास्यस्थानं विवेकिनाम् । आत्मनः सतत मूढा, नानारूप विडम्बनम् ॥ ३६२ ॥ कथम् ?—रचयन्त्यात्मनो वेषं, योषितां चित्तरञ्जनम् । आचरन्ति च मोहेन, देहे भूषणविभ्रमम् ॥ ३६३ ॥ तुष्यन्ति कामिनीलोललोचनार्धविलोकिताः । वहन्ति हृदये प्रीतिं, तदालापैर्मनोरमैः ॥ ३६४॥

धत्ते । चित्तं विभ्रान्तमेवोभैर्गुणाः कल्याणकारकाः ॥ ३२७ ॥ यतः—जन्मना लघुरप्येष, रागकेसरिणोऽधुना । वीर्येणाभ्यधिको लोके,
नरेन्द्रो भद्र! वर्तते ॥ ३२८ ॥ तथाहि—न भयं यान्ति दृष्टेन, रागकेसरिणा जनाः । दृष्ट्वा द्वेषगजेन्द्रं तु, जायन्ते भीत्यकम्पिताः
॥ ३२९ ॥ यावदेष महावीर्यश्चित्ताटव्यां विजृम्भते । बहिरङ्गजने तावत्कौतस्त्य प्रीतिसङ्गमः? ॥ ३३० ॥ येऽत्यन्तसुहृदो लोकाः,
स्नेहनिर्भरमानसाः । तेषामेष प्रकृत्यैव, चित्तविश्लेषकारकः ॥ ३३१ ॥ चित्तवृत्तिमहाटव्यां, चलत्येष यदा यदा । तदा तदा भवन्त्येव,
जनास्तेऽत्यन्तदुःखिताः ॥ ३३२ ॥ परलोके पुनर्यान्ति, नरके तीव्रवेदने । आबद्धमत्सरा वैरं, प्रविधाय परस्परम् ॥ ३३३ ॥ भद्र!
द्वेषगजेन्द्रोऽयं, यथार्थो नात्र संशयः । यस्य गन्धेन भज्यन्ते, विवेकाः कलभा इव ॥ ३३४ ॥ या त्वस्य भार्या वराक्षी, शोकेनैव निवे-
शिता । अत एव न पार्श्वस्था, दृश्यते साऽविवेकिता ॥ ३३५ ॥ प्रकर्षः प्राह यस्त्वेष, निविष्टस्तुङ्गविष्टरे । नरत्रयपरीवारः, पृष्ठतोऽ-
स्यैव भूपतेः ॥ ३३६ ॥ रक्तवर्णोऽतिलोलाक्षो, विलासोल्लासतत्परः । पृष्ठापीडितसूणीरः, सचापः पञ्चबाणकः ॥ ३३७ ॥ भ्रमद्भ्रमर-
झङ्कारहारिगीतविनोदितः । विलसद्रीतिलावण्यवर्ण्यया वरयोषिता ॥ ३३८ ॥ अस्या एव तनुश्लेषवक्त्रचुम्बनलालसः । कमनीयाकृतिः
सोऽयं, किंनामा माम! भूपतिः? ॥ ३३९ ॥ चतुर्भिः कलापकम् । विमर्शः प्राह नन्वेष, महाश्चर्यविधायकः । उद्दामपौरुषो लोके,
प्रसिद्धो मकरध्वजः ॥ ३४० ॥ यथेषोऽद्भुतकर्तव्यो, भवता नावधारितः । न किञ्चिदपि विज्ञातं, भद्राद्यापि ततस्त्वया ॥ ३४१ ॥
यो भद्र! श्रूयते लोके, परमेष्ठी पितामहः । सोऽनेन कारितो गौरीविवाहे बालविप्लवम् ॥ ३४२ ॥ स एव चाप्सरोनृत्तरूपविक्षिप्तमा-
नसः । अनेनैव कृतो भद्र!, पञ्चवक्त्रधरः किल ॥ ३४३ ॥ यो लोके जगतो व्यापी, श्रूयते किल केशवः । अनेन कारितः सोऽपि,
गोपीनां पादवन्दनम् ॥ ३४४ ॥ अन्यच्च भद्र! सोऽनेन, सुप्रसिद्धो महेश्वरः । स्थापितोऽर्धे शरीरस्य, गौर्यै विरहकातरः ॥ ३४५ ॥

प्रपलायन्ते, मीलयन्ति च लोचने ॥ ४२१ ॥ हुं हुं हुमिति जल्पन्ति, वक्रां कुर्वन्ति कन्धराम् । विशन्ति शौचवादेन, सचेलाः शीतले जले ॥ ४२२ ॥ नासिकां कुञ्चयन्त्युच्चैर्निष्ठीवन्ति मुहुर्मुहुः । आश्लेषे चर्मचेलादेः, क्रुद्धाः स्नान्ति पुनः पुनः ॥ ४२३ ॥ छायामपि च नेच्छन्ति, परेषां स्प्रष्टुमात्मना । जायन्ते शौचवादेन, वेताला इव दुःखिताः ॥ ४२४ ॥ चित्तशूकावशादेव, साक्षादुन्मत्तका अपि । केचिद्भद्र! प्रजायन्ते, ये जुगुप्सावशं गताः ॥ ४२५ ॥ परलोके पुनर्यान्ति, तत्त्वदर्शनवर्जिताः । तमोऽभिभूतास्ते मूर्खा, घोरसंसार-चारके ॥ ४२६ ॥ सदैव बहिरङ्गानां, लोकानां बहुदुःखदा । किञ्चित्ते वर्णिता भद्र!, जुगुप्साऽपि मयाऽधुना ॥ ४२७ ॥ प्रकर्षः प्राह—दृश्यन्ते, यान्येतानि पुरो मया । निविष्टानि नरेन्द्राणामुत्सङ्गादिषु लीलया ॥ ४२८ ॥ गाढं दुर्दान्तचेष्टानि, चटुलानि विशेषतः । आरक्तकृष्णवर्णानि, डिम्भरूपाणि पोतक ॥ ४२९ ॥ अमूनि नामभिर्माम!, गुणैश्च सुपरिस्फुटम् । अधुना वर्ण्यमानानि, श्रोतुमिच्छाम्यहं त्वया ॥ ४३० ॥ विमर्शः प्राह—सर्वेषामेतेषां सूरिभिः पुरा । सामान्यतः कषायाख्या, भद्र! लोके प्रकाशिताः ॥ ४३१ ॥ विशेषतः पुनर्भद्र!, यान्येतानीह वीक्षसे । महत्तमानि दुष्टानि, सर्वेषामग्रतस्तथा ॥ ४३२ ॥ चत्वारि गर्भरूपाणि, रौद्राकाराणि भावतः । तान्यनन्तानुबन्धीनि, गीतानि किल संज्ञया ॥ ४३३ ॥ अमूनि च प्रकृत्यैव, मिथ्यादर्शननामकः । अयं महत्तमो भद्र!, स्वात्मभूतानि पश्यति ॥ ४३४ ॥ ततश्च बहिरङ्गानां, लोकानां निजवीर्यतः । एतान्यपि प्रकुर्वन्ति, मिथ्यादर्शनभक्तताम् ॥ ४३५ ॥ यतः—यावदेतानि जृम्भन्ते, डिम्भरूपाणि लीलया । चित्तवृत्तिमहाटव्यां, तावत्ते बाह्यमानुषाः ॥ ४३६ ॥ अनन्यचित्ताः सततमेनमेव महत्तमम् । लोकवाक्यनिराकाङ्क्षाः, सद्भक्त्या पर्युपासते ॥ ४३७ ॥ अत एव च—चित्तवृत्तिमहाटव्यामुत्सर्पत्स्वेषु ते जनाः । न सत्त्वमार्गं भावेन, प्रपद्यन्ते कदाचन ॥४३८॥ एवं स्थिते—ये दोषा वर्णिताः पूर्वं, मिथ्यादर्शनसंभवाः । बहिर्जनानां सर्वेषां, तेषामेतानि कारणम् ॥४३९॥

मयोऽय रद्दिवस्तया ॥ ४०२ ॥ भद्र! प्रत्यभिजानीषे, किमेनं तु न साम्प्रतम्? । स यत्र नगरे शोक, यमसु द्रक्ष्यसि स्फुटम् ॥ ४०३ ॥
अनेनैव तदा वार्ता, समस्ताऽपि निवेदिता । सोऽयं समागतस्तूर्णं, शोको भद्र! पुनर्बले ॥ ४०४ ॥ अपेक्ष्य कारणं किञ्चिदय लोके
यहिगते । आविर्भूतः करोत्येष, दैन्याक्रन्दनरोदनम् ॥ ४०५ ॥ इष्टैर्वियुक्ता ये लोका, निमग्नाश्च महापदि । अनिष्टैः सम्प्रयुक्ताश्च, तस्य
स्युर्वशवर्तिनः ॥ ४०६ ॥ न लक्षयन्ति ते मूढा, यथैष रिपुरुत्कटः । अस्यावेशेन मुह्यन्ति, आराटीः केवल जडाः ॥ ४०७ ॥ एष
शोकः क्लिश्नाक, दुःखत्राणं करिष्यति । अय तु वर्धयत्येव, तेषां दुःखं निषेवितः ॥ ४०८ ॥ न साधयन्ति ते स्वार्थं, धर्माद्भ्रश्यन्ति
मानवाः । प्राणैरपि वियुज्यन्ते, मूर्च्छासमीलितेक्षणाः ॥४०९॥ ताडनं शिरसोऽत्यर्थं, लुञ्चनं कचसन्ततेः । कुट्टनं वक्षसो भूमौ, लोठनं
गात्रविक्षवम् ॥ ४१० ॥ तथाऽऽत्मोद्बन्धनं रज्ज्वा, पतनं च जलाशये । दहनं वह्निना शैलशिखरपातात्ममोचनम् ॥ ४११ ॥ भक्षणं का-
लकूटादेः, शस्त्रेणात्मनिपातनम् । प्रलापनमुन्मादं च, वैक्लव्यं दैन्यभाषणम् ॥ ४१२ ॥ अन्यदपि महाघोरं, शब्दादिसुखवञ्चनम् । ल-
भन्ते पुरुषा भद्र!, ये शोकवशवर्तिनः ॥ ४१३ ॥ इत्थं भूरितरं दुःखं, प्राप्नुवन्तीह ते भवे । कर्मबन्धं विधायोच्चैर्यान्त्यमुत्र च दुर्गतौ
॥ ४१४ ॥ सदैव बहिरङ्गानां, दुःखदो भद्र! देहिनाम् । किञ्चिल्लेशेन शोकस्ते, वर्णितः पुरतो मया ॥ ४१५ ॥ अस्यापि च शरीरस्था,
भवस्था नाम दारुणा । विद्यते पक्षिका तस्य!, शोकस्य गृहनायिका ॥ ४१६ ॥ साऽस्य सवर्धिका ज्ञेया, तां विना नैव जीवति । अत
एव शरीरस्थां, धारयत्येष सर्वदा ॥ ४१७ ॥ या त्वेषा दृश्यते कृष्णा, भोः सकोपितनासिका । नारी सा सूरिभिर्भद्र!, जुगुप्सा परि-
कीर्तिता ॥ ४१८ ॥ इयं तु बहिरङ्गानां, लोकानां मनसोऽधिकम् । व्यलीकभावमाधत्ते, तत्त्वदर्शनवर्जिनाम् ॥ ४१९ ॥ कृमिजालोल्बणं
देहं, पूयक्लिन्नं मलाविलम् । वस्तु दुर्गन्धि बीभत्सं, ते हि दृष्ट्वा कथंचन ॥ ४२० ॥ कुर्वन्ति शिरसः कम्पं, नासिकाधूननं जडाः । दूरत

॥४५८॥ युग्मम्।यानि त्वेतानि चेष्टन्ते, क्रीडयाऽष्टौ मुहुर्मुहुः। पुरो द्वेषगजेन्द्रस्य, गर्भरूपाणि सुन्दर! ॥४५९॥ असावेव प्रसूतानि, प्रि-याणि द्वेषभूपतेः। माताऽविवेकिताऽमीषां, सर्वेषां भद्र! गीयते॥४६०॥ युग्मम्। एवं च स्थिते—महामोहनरेन्द्रस्य, यानि पौत्राणि सुन्दर!। तत्पुत्रयोरपत्यानि, तात! विख्यातवीर्ययोः ॥ ४६१ ॥ तेषाममीषां लोकेऽत्र, दौर्ललित्यविराजितम्। वीर्यं सहस्रजिह्वोऽपि, को निवेद-यितुं क्षमः? ॥ ४६२ ॥ युग्मम्। पश्य पश्यात एवैषामेतानि निजचेष्टितैः। शीर्षे सिद्धार्थकायन्ते, सर्वेषामेव भूभुजाम् ॥४६३॥ तदिदं ते समासेन, मया तात! निवेदितम्। महामोहनरेन्द्रस्य, स्वाङ्गभूतं कुटुम्बकम् ॥ ४६४ ॥ ये त्वमी वेदिकाऽभ्यर्णे, विवर्तन्ते महीभुजः। ते महामोहराजस्य, स्वाङ्गभूताः पदातयः ॥ ४६५ ॥ तत्र च—य एष दृश्यते भद्र!, रागकेसरिणोऽग्रतः। आश्लिष्टललनो मृष्ट, ताम्बूल स्वादयमलम् ॥ ४६६ ॥ रणद्विरेफरिञ्छोलिसूचितोत्कटगन्धकम्। लीलाकमलमत्यर्थमाजिघ्रन्मुहुर्मुहुः ॥ ४६७ ॥ स्वभार्याऽमलवक्त्राब्जे, कुर्वाणो दृष्टिविभ्रमम्। वल्लकीनूपुरारावकाकलीगीतलम्पटः ॥ ४६८ ॥ यत्रैव विषयानेष, पश्यापि किल लीलया। भुञ्जानो मन्यते सर्व-मात्मनो भुक्तिमभ्यगम् ॥४६९॥ भद्र! सोऽयमिहायातो, वद यस्य विदक्षया। रागकेसरिणो मन्त्री, लोके विख्यातपौरुषः ॥४७०॥ पञ्चभिः कुलकं। अस्यैव तानि वर्तन्ते, पुत्रभाण्डानि सुन्दर!। यानि मिथ्याभिमानेन, कथितानि पुराऽऽवयोः ॥ ४७१ ॥ तद्वशेन जगत्सर्वं, वशीकृत्य महाबलः। भद्र! नूनं करोत्येष, चेष्टया तुल्यमात्मनः ॥ ४७२ ॥ तथाहि—पतत्प्रयुक्त्यै दृष्टा, मानुषैर्भद्र! देहिनः। ते स्पर्शरसगन्ध-रूपशब्देषु लालसाः ॥ ४७३ ॥ कार्याकार्यं न पश्यन्ति, बुध्यन्ते नो हिताहितम्। भक्ष्याभक्ष्यं न जानन्ति, धर्माचारबहिष्कृताः ॥ ४७४ ॥ तन्मात्रलब्धसौहार्दा, वर्तन्ते सार्वकालिकम्। नान्यत्किञ्चन वीक्षन्ते, यथाऽसौ वर्तते जड ॥ ४७५ ॥ त्रिभिर्विशेषकम्। दर्शनादेव निर्णीतो, मुद्रया च परिनिश्चितः। रसनाजनको भद्र!, स एवायं न संशयः ॥ ४७६ ॥ रागकेसरिणो राज्यं, तदयमिखिल

एतेभ्यो लघुरूपाणि, यानि चत्वारि सुन्दर! । अप्रत्याख्याननामानि, तानि गीतानि पण्डितैः ॥४४०॥ एतानि निजवीर्येण, यद्दिरङ्गमनु-
ष्यकान् । प्रवर्तयन्ति पापेषु, वारयन्ति निवर्तनम् ॥ ४४१ ॥ किं बहुना ?—यावदेतानि गाहन्ते, चित्तवृत्तिमहाटवीम् । तावद्भद्र! नि-
पतन्ते, न ते पापादणोरपि ॥ ४४२ ॥ तत्त्वमार्गं प्रपद्येरन्नेतेषु विलसत्स्वपि । लभन्ते तद्बलात्सौख्य, विरतिं तु न कुर्वते ॥ ४४३ ॥
ततस्तेऽमुत्र सवत्रा, निपतन्ति परत्र च । विधाय पापसंघात, संसारगहने जना ॥ ४४४ ॥ यान्येतानि पुनर्भद्र!, लघीयांसि ततोऽपि
च । प्रत्याख्यावारकाणीह, तुषाख्यानि प्रचक्षते ॥४४५॥ अमूनि किल वल्गन्ते, यावदत्रैव मण्डपे । बहिरङ्गजना सर्वं, तावन्मुञ्चन्त्यघ
न वै ॥ ४४६ ॥ किञ्चिन्मात्रं तु मुञ्चेयुः, पाप बाह्यजना किल । चित्तवृत्तिमहाटव्यामेतेषु विलसत्सु भोः ॥ ४४७ ॥ एतान्यपि स्व
रूपेण, तस्मात्सन्तापकारणम् । बहिर्जनानां कल्याणे, विरतिस्तत्र कारणम् ॥ ४४८ ॥ एतेभ्योऽपि लघीयांसि, यान्येतानीह सुन्दर! ।
वर्तन्ते गमरूपाणि, चत्वारि तव गोचरे ॥ ४४९ ॥ तानि सञ्ज्वलनाख्यानि, गीतानि मुनिपुङ्गवैः । लीलया चटुलानीत्यमुल्लसन्ति मुहु-
र्मुहुः ॥ ४५० ॥ एतानि सर्वपापेभ्यो, विरतानामपि देहिनाम् । इहोल्लसन्ति कुर्वन्ति, बाह्याना चित्तविप्लवम् ॥ ४५१ ॥ दूषयन्ति ततो
भूयः, सर्वपापनिबर्हणम् । ते सातिचारा जायन्ते, वीर्येणैषां बहिर्जनाः ॥ ४५२ ॥ न सुन्दराणि सर्वेषां, तदेतान्यपि देहिनाम् । लघुरू-
पाणि दृश्यन्ते, तात! यद्यपि जन्तुभिः ॥ ४५३ ॥ चतुष्टयानि चत्वारि, तदेतानि विशेषतः । एतेषां नामभिर्भद्र!, गुणैश्च कथितानि ते
॥ ४५४ ॥ प्रत्येकं यानि नामानि, ये गुणाश्च विशेषतः । एतेषां तत्पुनर्भद्र!, को वा वर्णयितुं क्षमः ? ॥ ४५५ ॥ तस्मात्ते कथयिष्यामि,
विभक्ष्यः कुत्रचित्पुनः । प्रस्तावागतमेवेह, वीर्यमेषां विशेषतः ॥ ४५६ ॥ अन्यच्च—एतेषां गर्भरूपाणां, मध्येऽष्टौ परया मुदा । यान्ये-
तानि प्रनृत्यन्ति, रागकेसरिणोऽग्रतः ॥ ४५७ ॥ तान्यस्मादेव जातानि, रागकेसरिण किल । अत्यन्तवल्लभान्यस्य, मूढतानन्दनानि च

महाभटा। महामोहनरेन्द्रस्य, स्वाङ्गभूताः पदातयः ॥ ४९४ ॥ युग्मम् अन्यच्च—महामोहनृपस्येष्टा, रागकेसरिणो मताः । सुता द्वेषगजेन्द्रस्य,
सर्वेऽप्येते महीभुजः ॥ ४९५ ॥ अनेन मन्त्रिणाऽऽदिष्टा, राज्यकार्येषु सर्वदा । एते भद्र ! प्रवर्तन्ते, निवर्तन्ते च नान्यथा ॥ ४९६ ॥
ये केचिद्बाह्यलोकानां, क्षुद्रोपद्रवकारिणः । अन्तरङ्गा महीपालास्तेऽमीषां मध्यवर्तिनः ॥ ४९७ ॥ नार्यो डिम्भाश्च ये केचिदन्येऽप्येवंविधा
जने । अमीषां मध्यगाः सर्वे, द्रष्टव्यास्ते महीभुजाम् ॥ ४९८ ॥ तदेते परिमातीता, निवेद्यन्तां कथं मया ? । संक्षेपत समाख्याताः,
स्वाङ्गभूताः पदातयः ॥ ४९९ ॥ प्रकर्षः प्राह—ये त्वेते, वेदिकाद्वारवर्तिनः । निविष्टा भूभुजः सप्त, माम ! मुत्कलमण्डपे ॥ ५०० ॥
मुक्ताः सत्परिवारेण, नानारूपविराजिनः । एते किंनामका ज्ञेयाः ?, किंगुणा वा महीभुजः ? ॥ ५०१ ॥ विमर्शः प्राह—मन्त्रैते, सप्तापि
वरभूभुजः । महामोहनृपस्यैव, बहिर्भूताः पदातयः ॥ ५०२ ॥ तत्र च—य एष दृश्यते भद्र !, संयुक्त पञ्चभिर्नरैः । ज्ञानसंवरणो
नाम, प्रसिद्धः स महीपतिः ॥ ५०३ ॥ अत्रैव वर्तमानोऽयं, बहिःस्थं सकलं जनम् । करोत्यन्धं स्ववीर्येण, ज्ञानोद्योतविवर्जितम् ॥५०४॥
किं च—सान्द्राज्ञाना धकारेण, यतो मोहयते जनम् । ततोऽयं शिष्टलोकेन, मोह इत्यपि कीर्तितः ॥ ५०५ ॥ यस्त्वेष नवभिर्युक्तो,
मानुषैः प्रविभाव्यते । दर्शनावरणो नाम, विख्यातः स महीतले ॥ ५०६ ॥ दृश्यन्ते पञ्च या नार्यस्ताः स्ववीर्येण सुन्दराः । करोत्येष
जगत्सर्वं, घूर्णमानगतिक्रियम् ॥ ५०७ ॥ ये त्वमी पुरुषा भद्र !, चत्वारोऽस्य पुर स्थिताः । एतत्साभर्थ्ययोगेन, जगदन्धं करोत्ययम्
॥ ५०८ ॥ नरद्वयसमायुक्तो, यः पुनर्भद्र ! दृश्यते । स एष वेदनीयाख्यो, राजा विख्यातपौरुषः ॥ ५०९ ॥ सातनामा प्रसिद्धोऽस्य,
जगति प्रथमो नरः । करोत्याह्लादसन्दोहनन्दितं भुवनत्रयम् ॥ ५१० ॥ द्वितीयः पुरुषो भद्र !, यस्त्वस्य प्रविलोक्यते । असातनामकः
सोऽयं, जगत्सन्तापकारकः ॥ ५११ ॥ दीर्घह्रस्वैः समायुक्तश्चतुर्भिर्डिम्भरूपकैः । विवर्तते महीपालो, यस्त्वेष तव गोचरे ॥ ५१२ ॥

त्वा । परबुद्धिप्रयोगेण, नैवैष प्रतिहन्यते ॥ ४७७ ॥ पुरुषाः पश्चिवास्तावद्बहिरङ्गा इहात्मना । यावदेष स्ववीर्येण, वामो क्षिपति कुत्रचित्
। ४७८ ॥ यदा पुनर्महामोहस्थानेष सचिवः क्वचित् । आरमेत स्ववीर्येण, बहिरङ्गमनुष्यकान् ॥ ४७९ ॥ तदा ते निहतप्राया, बालिशा
इव किङ्कराः । भवामह विमुच्यास्य, जायन्ते विगतत्रपाः ॥४८०॥ युग्मम् । वर्णयत्येष साम्राज्यमेतेषामेव भूभुजाम् । बहिरङ्गजनस्यायममात्यो
दुःखदः सदा ॥ ४८१ ॥ यतः—अस्यादेशेन कुर्वन्ति, पाप ते बाह्यमानुषाः । तच्च पाप कृत तेषामिहामुत्र च दुःखदम् ॥ ४८२ ॥
निपुणो नीतिमार्गेषु, गाढ निर्व्याजपौरुष । भेदक परचित्तानामुपायकरणे पटुः ॥ ४८३ ॥ विदिताशेषवृत्तान्तः, सन्धिविग्रहकारकः ।
विकल्पबहुलो लोके, सचिवो नास्त्यमूदृशः ॥ ४८४ ॥ युग्मम् । किं चात्र बहुनोक्तेन ?, तावदेते नरेश्वराः । यावदेष महामन्त्री, चक्रको
राज्यसंहृतेः ॥ ४८५ ॥—ततः सहर्षः प्रकर्षोऽब्रवीत्—साधु माम' साधु सुन्दरं निर्णीत मामेन, न तिलतुषत्रिभागमात्रयाऽपि चल-
तीदं, एवंविध एवायं विषयाभिलाषो महामन्त्री, नास्त्यत्र सन्देहः, तथाहि—आकारदर्शनादेव, ते गुणा मम मानसे । आयातेव समा-
रूढा, येऽस्य संवर्णितास्त्वया ॥४८६॥ विमर्शः प्राह—नाश्चर्यं, लक्षयन्ति भवादृशाः । नराणां दृष्टमात्राणां, यद्गुणागुणरूपताम् ॥४८७॥
तथाहि—ज्ञायते रूपतो जातिर्जातेः शीलं शुभाशुभम् । शीलाद्गुणाः प्रकाशन्ते, गुणैः सत्त्वं महाधियाम् ॥४८८॥ न केवल त्वया
ऽस्यैव, दर्शनादेव लक्षिता । गुणाः किं तर्हि ? सर्वेषां, नूनमेषां महीभुजाम् ॥ ४८९ ॥ पुरोऽर्धासनस्य ते मद्र', किं वा स्यादधिमिश्रितम् ?।
यत्तु मां प्रश्नयस्येव, तात' सा तेऽभिजातता ॥ ४९० ॥ प्रकर्षः प्राह—यथैव, ततो माम' निवेद्यताम् । किंनामिकेयं भार्योऽस्य ?, म-
न्त्रिणो मुग्धलोचना ॥ ४९१ ॥ विमर्शः प्राह—भद्रेय, भोगतृष्णाऽभिधीयते । गुणैस्तु तुल्या विज्ञेया, सर्वथाऽस्यैव मन्त्रिणः ॥ ४९२ ॥
ये स्थिते पुरतः केचित्पार्श्वेत पृष्ठतोऽपरे । दृश्यन्ते भूभुजो भद्र', मन्त्रिणोऽस्य नतानना ॥ ४९३ ॥ दुष्टाभिसन्धिप्रमुखास्ते विज्ञेया

मातुलजल्पितम् । प्रकर्षो हृष्टचित्तस्त्वाविद वचनमब्रवीत् ॥ ५३२ ॥ चारु माम ! कृतं चारु, मोचितो मोहपञ्जरात् । एतेषां वर्णनं राज्ञां,
कुर्वतैवमहं त्वया ॥ ५३३ ॥ केवलं कश्चिदद्यापि, माम पृच्छामि संशयम् । तमाकर्ण्य पुनर्मामो, ममाख्यातुमर्हसि ॥ ५३४ ॥ ततो
विमर्शस्तुष्टात्मा, त प्रतीतसमापत । पृच्छ यत्रोच्यते तुभ्यं, भद्र ! विश्रब्धचेतसा ॥ ५३५ ॥ प्रकर्ष आह—मामाय, विस्मयो मम मा-
नसे । एषु सकीर्त्यमानेषु, राजसु प्रतिभासते ॥ ५३६ ॥ यदाऽमून्मण्डपान्तःस्थान्निरीक्षे नायकानहम् । परिवारं न पश्यामि, तदाऽमीषां
निजं निजम् ॥ ५३७ ॥ यदा विलोकयाम्युच्चैः, परिवारं विशेषतः । तदा विस्फारिताक्षोऽपि, नैवेक्षे नायकानहम् ॥ ५३८ ॥ भवता तु
परीवारो, नायकाश्च पृथक् पृथक् । नामतो गुणतश्चैव, कीर्तिता तत तत्कथम् ? ॥ ५३९ ॥ विमर्शेनोदितं—वत्स !, न विधेयोऽत्र वि-
स्मयः । नैकदोभयवेत्ताऽत्र, कश्चिदन्योऽपि विद्यते ॥ ५४० ॥ यतः—ये निरावरणज्ञानाः, केवलालोकभास्कराः । प्रभुं परिकरं चैषां,
नैकदा तेऽपि जानते ॥ ५४१ ॥ यतः—सामान्यरूपा राजानः, सर्वेऽमी परिकीर्तिताः । विशेषरूपा विज्ञेया, सर्वे चामी परिच्छदाः
॥ ५४२ ॥ तथाहि—“अवयव्यत्र सामान्यं, विशेषोऽवयवाः स्मृताः । राजानश्चांशिनो ज्ञेयास्तदंशास्तु पदातयः ॥ ५४३ ॥ इह च—ना-
“यात कस्यचित्साक्षादेकदा ज्ञानगोचरम् । यद्यैतौ प्रकृतिस्तात !, सा सामान्यविशेषयोः ॥ ५४४ ॥ देशकालसमावेश, भेदोऽपि च न
“विद्यते । तादात्म्यादेतयोस्तात !, तेनैकः प्रतिभाति ते ॥ ५४५ ॥ तथाहि—के तरोर्भेदिनः सन्तु, धवाम्रखदिरादयः । धवाम्रादिविना-
“भूतः, कस्तरुर्वा ? प्रकाश्यताम् ॥५४६॥ श्रुतस्कन्धातिरेकेण, नास्त्यध्ययनसंभवः । न चाध्ययननिर्मुक्तः, श्रुतस्कन्धोऽस्ति कश्चन ॥५४७॥
“केवलं यौगपद्येन, न दृष्टौ तावितीयता । नादृष्टावेव तौ वत्स !, कालभेदेन दर्शनात् ॥ ५४८ ॥ तथाहि—दृश्यते हि तरुर्दूरान्न लक्ष्यन्ते
“धवादयः । अभ्यर्णे तेऽपि दृश्यन्ते, लक्ष्यते न तरुः पृथक् ॥५४९॥ तथापि सह्य दृष्ट, कालभेदेऽपि कीर्त्यते । यथाक्रमेण दृष्टत्वाद्रूपा-

आयुनामा प्रसिद्धोऽय, सर्वेषा मत्र' देहिनाम्। निजे भवे किलावस्था, कुरुते डिम्भतेनमा ॥५१३॥ युग्मम् । [illegible], [illegible]
महाबल । यस्त्वेष दृश्यते भद्र', नामनामा महीपतिः ॥ ५१४ ॥ निजमानुपवीर्येण, जगदेत [illegible] । [illegible] [illegible]', [illegible]
स्यातु न पार्यते ॥५१५॥ युग्मम् । तथाहि—चतुर्गतिकससारे, नरनारकरूपताम् । ये [illegible] विधत्ते, [illegible] ॥५१६॥ [illegible]
न्द्रियादिभेदेन, नानादेहविवर्तिन । नानाङ्गोपाङ्गसबद्धाः, सघातकरणोद्यताः ॥ ५१७ ॥ भिन्नमहनना [illegible] [illegible] ।
वणग धरसस्पर्शभेदेन विविधाख्यया ॥ ५१८ ॥ गौरवेतरहीनाश्च, स्रोपघातपरायणा । परापातपरा केचित्[illegible] ॥ ५१९ ॥
मदुच्छ्वासातपोद्योतविहायोगतिगामिन । त्रसस्थावरभेदाश्च, सूक्ष्मबादररूपिण ॥ ५२० ॥ पर्याप्तकेतरा केचिदन्ये [illegible] ।
साधारणाः स्थिरा केचित्तथान्ये स्थिररूपिणः ॥ ५२१ ॥ शुभाशुभत्व बिभ्राणाः, सुभगा दुर्भगास्तथा । सुस्वरा दु स्वरा लोके, ये चादेया
मनोहराः ॥ ५२२ ॥ अनादेयाः स्वर्गेऽपि, यशःकीर्तिसमन्विता । अयशःकीर्तियुक्ताश्च, निर्मिताऽऽत्मशरीरका ॥ ५२३ ॥ [illegible]-
चोम्मौलिमालार्चितक्रमाः । ये च तीर्थकरा लोके, भवन्ति भवभेदिनः ॥ ५२४ ॥ निजमानुपवीर्येण, सर्वमेष नराधिप । [illegible]
मत्त', नामनामा महाबल ॥ ५२५ ॥ दक्षभिः कुलक । यः पुनर्भद्र' भूपोऽय, वीक्षते पुरत स्थितम् । आत्मभूत महावीर्य, नीचोच
पुरुषद्वयम् ॥ ५२६ ॥ गोत्राभिधानो विख्यातः, स एष जगतीपतिः । देहिनां कुरुते भद्र', सुन्दरेतरगोत्रताम् ॥ ५२७ ॥ [illegible]-
सेम्योऽय, यः पुनः प्रतिभाव्यते । अन्तराय इति ख्यातः, स तात' धरभूपतिः ॥ ५२८ ॥ भय तु नरवीर्येण, कुरुते पापदेहिनाम् ।
दानभोगोपभोगाप्तिवीर्यविघ्नं नराधिपः ॥ ५२९ ॥ तदेते कथितास्तात', नामभिर्गुणलेशतः । सप्तापि भूभुजस्तुभ्यं, समासेन मयाऽधुना
॥ ५३० ॥ वीर्यवक्तव्यतामेषां, विस्तरेण पुनर्यदि । वर्णयामि ततोऽत्येति, तत्रैव मम जीवितम् ॥ ५३१ ॥ तदेवमतिगम्भीरं, श्रुत्वा

मातुलजल्पितम् । प्रकर्षो हृष्टचित्तत्वादिद वचनमब्रवीत् ॥ ५३२ ॥ तात माम ! क्व तात, मोचितो मोहपञ्जरात् । एतेषां वर्णन राज्ञा,
कुर्वतैवमहं त्वया ॥ ५३३ ॥ केवलं किञ्चिदद्यापि, माम पृच्छामि संशयम् । समाकर्ण्य पुनर्मामो, ममाख्यातुमर्हति ॥ ५३४ ॥ ततो
विमर्शस्तुष्टात्मा, स प्रतीदमभाषत । पृच्छ यत्रोचते तुभ्यं, भद्र ! विश्रब्धचेतसा ॥ ५३५ ॥ प्रकर्षः प्राह—मामाय, विस्मयो मम मा-
नसे । एषु सकीर्त्यमानेषु, राजसु प्रतिभासते ॥ ५३६ ॥ यदाऽमून्मण्डपान्तःस्थानिरीक्षे नायकानहम् । परिवारं न पश्यामि, तदाऽमीषां
निज निजम् ॥ ५३७ ॥ यदा विलोकयाम्येते , परिवारं विशेषतः । तदा विस्फारिताक्षोऽपि, नैवेक्षे नायकानहम् ॥ ५३८ ॥ भवता तु
परीवारो, नायकाश्च पृथक् पृथक् । नामतो गुणतश्चैव, कीर्तिता वद तत्कथम् ? ॥ ५३९ ॥ विमर्शेनोदित—वत्स !, न विधेयोऽत्र वि-
स्मयः । नैकदोषमयवेषाऽत्र, कश्चिदन्योऽपि विद्यते ॥ ५४० ॥ यतः—ये निराभरणज्ञाना , केवलालोकभास्कराः । प्रभु परिकरं चैषां,
नैकदा तेऽपि जानते ॥ ५४१ ॥ यतः—सामान्यरूपा राजान , सर्वेऽमी परिकीर्तिता । विशेषरूपा विज्ञेया, सर्वे चामी परिच्छदाः
॥ ५४२ ॥ तथाहि—"अवयव्यत्र सामान्य, विशेषोऽवयवा स्मृता । राजानश्चांशिनो ज्ञेयास्तदंशास्तु पदातय ॥ ५४३ ॥ इह च—ना-
"यातः कस्यचित्साक्षादेकदा ज्ञानगोचरम् । यथैतौ प्रकटित्वात !, सा सामान्यविशेषयो ॥ ५४४ ॥ देशकालस्वभावैश्च, भेदोऽपि च न
"विद्यते । तादात्म्यादेतयोस्तात !, तेनैकः प्रतिभाति ते ॥ ५४५ ॥ तथाहि—के तरोर्भेदिनः सन्तु, धवाम्रखदिरादयः । धवाम्रादिविना
"भूतः, कस्तरुर्वा ? प्रकाश्यताम् ॥५४६॥ श्रुतस्कन्धातिरेकेण, नास्त्यध्ययनसंभव । न चाध्ययननिर्मुक्तः, श्रुतस्कन्धोऽस्ति कश्चन ॥५४७॥
"केवल यौगपद्येन, न दृष्टौ तावितीयता । नादृष्टावेव तौ वत्स !, कालभेदेन दर्शनात् ॥ ५४८ ॥ तथाहि—दृश्यते हि तरुर्दूराच्च लक्ष्यन्ते
"धवादयः । अभ्यर्णे तेऽपि दृश्यन्ते, लक्ष्यते न तरु पृथक् ॥५४९॥ तथापि तद्द्वय दृष्टं, कालभेदेऽपि कीर्त्यते । यथाक्रमेण दृष्टत्वाद्भूपा-

"(यथा)ताम्रसुरादिभिः ॥५५०॥ मतो भेदेन दृष्टत्वाद्भ्रममेवमिष्यताम् । अभिन्नस्य हि नो भिन्न, कालभेदेऽपि दर्शनम् ॥५५१॥ तथाहि
"—अभेदेऽपि समावायैस्सामान्यविशेषयोः । संख्यासञ्ज्ञाऽऽख्यकार्येभ्यो, भेदोऽप्यस्ति परिस्फुट ॥ ५५२ ॥ तेन तद्वारजः सर्वो, व्यव-
"हारो न दुष्यति । भेदाभेदात्मके तत्त्वे, भेदस्यैतस्य दर्शनात् ॥ ५५३ ॥ तथाहि—संख्यया तरुरित्येको, भूयांसः तरवस्तथा । सञ्ज्ञा-
"ऽपि तरुरित्येषां, धवाम्रार्कादिभेदिनाम् ॥ ५५४ ॥ अनुवृत्तिस्तरोस्तेषु, लक्षणं पृथगीक्ष्यते । धवाश्वत्थादिभेदानां, व्यावृत्तिश्च परस्परम्
"॥ ५५५ ॥ कार्यं तु तरुमात्रेण, साध्यं छायादिक पृथक् । विशिष्टफलपुष्पाद्यमन्यदेवाम्रकादिभिः ॥ ५५६ ॥ व्यवहारोऽपि सामान्ये,
"द्भूतस्कन्धेऽन्य एव हि । अन्य एवास्य भेदेषु, यदुदेशादिलक्षणः ॥ ५५७ ॥" तदात्र भेदमाश्रित्य, संख्यासञ्ज्ञादिगोचरम् । अभेद च
विरोधाय, देशकालस्वभावजम् ॥ ५५८ ॥ राजानः परिवाराश्च, मया वत्स¹ पृथक् पृथक् । नामतो गुणसङ्ख्याभ्यां, तथाभे परिकी-
र्तिताः ॥ ५५९ ॥ युग्मम्। एवं च भेदिनोऽप्येते, न परस्परभेदिनः । यौगपद्येन भासन्ते, भद्र¹ तन्मुञ्च संशयम् ॥५६०॥ न चान्यत्रापि
कर्तव्यो, विस्मयो लक्षणादिभि । कथ्यमाने मया भेदे, भो सामान्यविशेषयोः ॥ ५६१ ॥ प्रकर्षेणोदित माम¹, नष्टोऽस्य संशयोऽधुना ।
ममैष माम¹ सन्देहः, परिस्फुरति मानसे ॥ ५६२ ॥ यदुत—य एते सप्त राजान, एतेषां मध्यवर्तिन । तृतीयश्च चतुर्थश्च, पञ्चम
षष्ठ एव च ॥ ५६३ ॥ एते महीपाश्चत्वारो, यथा व्यावर्णितास्त्वया । तथा जनस्य लक्ष्यन्ते, सुन्दरेतरकारिणः ॥ ५६४ ॥ नैकान्तेनैव
सर्वेषामपकारपरायणाः । एते हि मातलोकानां, केषाञ्चित्सुखहेतवः ॥५६५॥ त्रिभिर्विशेषकम् । आद्यो राजा द्वितीयश्च, यश्च पर्यन्तभूपतिः ।
दुःखदा एव सर्वेषां, त्रयोऽप्येते तु देहिनाम् ॥५६६॥ ततः सपरिवारेण, महामोहमहीभुजा । एवैश्च हतसाराणां, तेषां किं नाम जीवितम् ?
॥ ५६७ ॥ एवं च स्थिते—किं विद्यन्ते जनाः केचि[illegible] देहिषु ? । अमीभिर्न कदर्थ्यन्ते, ये चतुर्भिररातिभिः ॥ ५६८ ॥ किं

वा न समवन्त्येव, तादृशा माम ! देहिनः । येऽमीषां निजवीर्येण, प्रतापक्षतिकारिणः ॥ ५६९ ॥ तच्छ्रुत्वा भागिनेयोक्तं, वचनं विहिता-
दरः । अवादीदीदृशं वाक्यं, विमर्शो मधुराक्षरैः ॥ ५७० ॥—विद्यन्ते बहिरङ्गेषु, वत्स ! लोकेषु तादृशाः । एतेषां वीर्यनिर्णाशाः, के-
वलं विरला जनाः ॥ ५७१ ॥ तथाहि—सद्भूतभावनामन्त्रप्रध्वस्ता महाधियः । कृतात्मकवचा नित्यं, ये तिष्ठन्ति बहिर्जनाः ॥ ५७२ ॥
अप्रमादपरास्तेषामेते सर्वेऽपि भूभुजः । महामोहादयो वत्स !, नोपतापस्य कारकाः ॥५७३॥ युग्मम् । यतः—सततं भावयन्त्येव, निर्मलीमस-
मानसाः । जगत्स्वरूपं ये धीरा", महासद्बुद्धयः ॥ ५७४ ॥ कथम् ?—"अनादिनिधनो घोरो, दुस्तरोऽयं भवोदधिः । राधावेधोपमा
"लोके, दुर्लभा च मनुष्यता ॥ ५७५ ॥ मूलं हि सर्वकार्याणामाशापाशनिबन्धनम् । जलबुद्बुदसंकाशं, दृष्टनष्टं च जीवितम् ॥ ५७६ ॥
"बीभत्समशुचेः पूर्णं, कर्मजं भिन्नभाजनम् । गम्यं रोगपिशाचानां, शरीरं क्षणभङ्गुरम् ॥ ५७७ ॥ यौवनं च मनुष्याणां, सन्ध्यारक्ताभ्र-
"विभ्रमम् । चण्डवातेरिताम्भोदमालारूपाश्च सम्पदः ॥ ५७८ ॥ आदौ सपादिवाह्लादाः, पर्यन्तेऽत्यन्तदारुणाः । एते शब्दादिसम्भोगाः
"किम्पाकफलसन्निभाः ॥ ५७९ ॥ माता भ्राता पिता भार्या, पुत्रो जातेति जन्तवः । जाता सर्वेऽपि सर्वेषामनादिभवचक्रके ॥ ५८० ॥
"उषित्वैकतरौ रात्रौ, यथा प्रातर्विहङ्गमाः । यथायथं व्रजन्त्येव, कुटुम्बे विभवान्धवाः ॥ ५८१ ॥ इष्टैः समागमाः सर्वे, स्वप्नाप्तनिधिरूप-
"ताम् । नूनं समाचरन्त्येव, वियोगानलतापिनः ॥ ५८२ ॥ जरा जर्जरयत्येव, देहं सर्वशरीरिणाम् । दलयत्येव भूतानि, भीमो मृत्युम-
"हीधरः ॥ ५८३ ॥" ततश्च—तेषामेवंविधानेकभावनाभ्यासशालिनाम् । निर्धूततमसां पुंसां, निर्मलीभूतचेतसाम् ॥ ५८४ ॥ भद्र ! नैष
महीपालो, महामोहः समार्यकः । जायते बाधको नापि, सचधूकाविमौ सुतौ ॥ ५८५ ॥ युग्मम् । अन्यच्च—न शोको नारतिस्तेषां, न
भयो नापि क्षेपकाः । दुष्टाभिसन्धिप्रमुखा, नूनं बाधाविधायकाः ॥ ५८६ ॥ नामूनि डिम्भरूपाणि, न चान्ये भद्र ! तादृशाः । येरेष

''(यथा)चाम्रपुरादिभिः ॥५५०॥ अतो भेदेन दृष्टव्यान्निभमभेदमिष्यताम् । अभिन्नस्य हि नो भिन्न, कालभेदेऽपि दर्शनम् ॥५५१॥ तथाहि
''—अभेदेऽपि समाधार्येस्सामान्यविशेषयोः । संख्यासंज्ञाऽङ्ककार्येभ्यो, भेदोऽप्यस्ति परिस्फुट ॥ ५५२ ॥ तेन महाराज सर्वो, व्यव-
''हारो न दुष्यति । भेदाभेदात्मके तत्त्वे, भेदस्यैवं निदर्शनात् ॥ ५५३ ॥ तथाहि—सम्यया तरुरित्येको, भूयासः खदिरादय । सज्ञा-
''ऽपि तरुरित्येषां, धवाम्रार्कादिभेदिनाम् ॥ ५५४ ॥ अनुवृत्तिरसारोरस्तेषु, लक्षण पृथगीक्ष्यते । धवाश्वत्थादिभेदानां, व्यावृत्तिश्च परस्परम्
''॥ ५५५ ॥ कार्यं तु तरुमात्रेण, साध्यं छायादिक पृथक् । विशिष्टफलपुष्पाद्यमन्यदेवाम्रकादिभिः ॥ ५५६ ॥ व्यवहारोऽपि सामान्ये,
''मूलस्कन्धेऽन्य एव हि । अन्य एवास्य भेदेषु, यदुद्देशादिलक्षणः ॥ ५५७ ॥'' तस्माच्च भेदमाश्रित्य, संख्यासंज्ञादिगोचरम् । अभेद च
विरोधाय, देशकालसमावजम् ॥ ५५८ ॥ राजानः परिवाराश्च, मया वत्स! पृथक् पृथक् । नामतो गुणसंख्याभ्यां, तवामे परिकी-
र्तिताः ॥ ५५९ ॥ युग्मम् । एव च भेदिनोऽप्येते, न परस्परभेदिनः । यौगपद्येन भासन्ते, भद्र! तन्मुञ्च संशयम् ॥५६०॥ न चान्यत्रापि
वर्तन्ते, विसमयो लक्षणादिभिः । कथ्यमाने मया भेदे, मोः सामान्यविशेषयोः ॥ ५६१ ॥ प्रकर्षेणोदित माम!, नष्टोऽस्य संशयोऽधुना ।
ममैष माम! सन्देहः, परिस्फुरति मानसे ॥ ५६२ ॥ चतुर—य एते सप्त राजान, एतेषां मध्यवर्तिन. । तृतीयश्च चतुर्थश्च, पञ्चमः
षष्ठ एव च ॥ ५६३ ॥ एते महीपास्त्वत्वारो, यथा व्यावर्णितास्त्वया । तथा जनस्य लक्ष्यन्ते, सुन्दरेतरकारिण. ॥ ५६४ ॥ नैकान्तेनैव
सर्वेषामपकारपरायणाः । एते हि वाह्यलोकानां, केषांचित्सुखहेतवः ॥५६५॥ त्रिभिर्विशेषकम् । आद्यो राजा द्वितीयश्च, यश्च पर्यन्तभूपतिः ।
दुःखदा एव सर्वेषां, त्रयोऽप्येते तु देहिनाम् ॥५६६॥ ततः सपरिवारेण, महामोहमहीभुजा । एतैश्च हतसाराणां, तेषां किं नाम जीवितम्?
॥ ५६७ ॥ एवं च स्थिते—किं विद्यन्ते जनाः केचिद्वहिरङ्गेषु देहिषु? । अमीभिर्न कदर्थ्यन्ते, ये चतुर्भिस्त्रादिभिः ॥ ५६८ ॥ किं

लोऽप्यस्तेषां ?, निर्दग्धा शुभपद्धतिः ॥६४३॥ केवलं तादृशास्तात !, बहिरङ्गेषु देहिषु । अत्यन्तविरला लोकास्तेनेदं गीयते जनैः ॥६४४॥ शैले शैले न माणिक्यं, मौक्तिकं न गजे गजे । साधवो न हि सर्वत्र, चन्दनं न वने वने ॥ ६४५ ॥ तदेवं कथितं तुभ्यं, सन्ति ते बाह्यदेहिनः । केवलं विरला राज्ञां, येऽमीषां दर्पनाशिनः ॥ ६४६ ॥ प्रकर्षः प्राह—हे माम !, कुत्र तिष्ठन्ति देहिनः । यैरीदृशोऽपि विक्षिप्तः, शत्रुवर्गो महात्मभिः ? ॥ ६४७ ॥ विमर्शेनाभिहितं—वत्स ! समाकर्णय साम्प्रतं श्रुतं मयाऽऽप्तजनसकाशात्पूर्वं यदुत—अस्ति समस्तपूर्वान्तसन्तानाधारविस्तारमनादिनिधनं भूरिप्रकाराद्भुतभूमितलं भवचक्रं नाम नगरं, अतिविस्तीर्णतया च तस्य नगरस्य विद्यन्ते तत्र बहून्यवान्तरपुराणि, सन्ति बहुतराः पाटकाः, सम्भवन्ति बहुतमा भवनपङ्क्तयः, समाम्नायन्ते भूयांसि देवकुलानि, सङ्ख्यातीताश्च नानाजातयस्तत्र लोकाः प्रतिवसन्ति, ततोऽहमेवं वितर्कयामि यदुत—विद्यन्ते तत्र भवचक्रेनगरे बहिरङ्गलोका यैरेष महामोहनरेन्द्रप्रमुखः शत्रुवर्गः स्ववीर्येण विक्षिप्त इति ॥ प्रकर्षः प्राह—माम ! तत् किमन्तरङ्गं तन्नगरं ? किं वा बहिरङ्गमिति ?, विमर्शेनोक्तं—तात ! न शक्यते तदेकपक्षनिक्षेपेणावधारयितुं यथाऽन्तरङ्गं यदि वा बहिरङ्गमिति, यस्मात्तत्र यथा बहिरङ्गजनास्तथैतेऽपि सर्वेऽन्तरङ्गलोका विद्यन्ते, यतोऽमीषां प्रतिपक्षभूतोऽसौ सन्तोषस्तत्रैव नगरे श्रूयते, ततोऽमीभिरनुविद्धं समस्तं नगरं, प्रकर्षेणोक्तं—नन्वमी अत्र वर्तमानाः कथं तत्र विचरेयुः ?, विमर्शेनोक्तं—तात ! योगिनः खल्वेते महामोहराजादयः सर्वेऽप्यन्तरङ्गलोकाः तस्मादत्रापि दृश्यन्ते तत्रापि वर्तन्ते, न कश्चिद्विरोधः, यतो जानन्ति यथेष्टबहुविधरूपकरणं कुर्वन्ति परपुरप्रवेशं समाचरन्ति चान्तर्धानं पुनः प्रकटीभवन्ति यथेष्टस्थानेषु, ततोऽचिन्त्यमाहात्म्यातिशयाः खल्वेते राजानः, ते यथाकामचारितया कुत्र न विचरेयुः ?, तस्मादुभयलोकाधारतयोभयरूपमेवैतन्मन्तव्यं भवचक्रं नगरं ॥ प्रकर्षेणोक्तं—तर्हि यदि तत्र सन्तोषो वर्तते ते चामीषां भूभुजां दर्पदलनकारिणो महात्मानो लोका विद्यन्ते ततो

सर्वभूतदया शौचं, जलशौचं तु पञ्चमम् ॥ ६२५ ॥ एवं च स्थिते—कार्यं जलेनं नोऽकार्यं, किं तु तत्कार्यमीदृशम् । विधीयमानं यच्छौचं, भूतानां नोपघातकम् ॥ ६२६ ॥ तच्च संजायते नूनं, बहिर्मलविशुद्धये । नान्तरङ्गमलक्षालि, यत उक्तं मनीषिभिः ॥ ६२७ ॥ चित्तमन्तर्गतं दुष्टं, न स्नानाद्यैर्विशुध्यति । शतशोऽपि हि तद्धौतं, सुराभाण्डमिवाशुचि ॥६२८॥ किंच—शरीरमलमप्येतज्जलशौचकृतं जनैः । तेषां विशोधयत्येकं, क्षणमात्रं न सर्वदा ॥ ६२९ ॥ यतः—रोमकूपादिभिर्जन्तोः, शरीरं शतजर्जरम् । धौतं धौतं स्रवत्येव, नैतच्छुध्यति कर्हिचित् ॥ ६३० ॥ तथाहि—कश्चित्प्रवर्तमानानां, देवताऽतिथिपूजने । केषाञ्चित्कारणं, भक्तैर्जलशौचमनिन्दितम् ॥ ६३१ ॥ केवलं नाग्रहः कार्यो, विदुषा तत्त्ववेदिना । तत्रैव जलजे शौचे, स हि मूर्खत्वकारणम् ॥ ६३२ ॥ ततश्च—एवं विशुद्धयुक्तीनां, जलशौचादि कुर्वताम् । सद्ज्ञानपरिपूतानां, तेषां तात ! महात्मनाम् ॥ ६३३ ॥ याप्येषा कथिता पूर्वमिहामुत्र च तु सदा । जुगुप्सा साऽपि नष्टत्वाभैव पापविधायिका ॥६३४॥ युग्मम् । यावप्येतौ जगच्छत्रू, पूर्वं व्यावर्णितौ मया । ज्ञानसंवरणो राजा, दर्शनावरणस्तथा ॥६३५॥ तौ सर्वज्ञागमाभ्याससवासनावासितात्मनाम् । अप्रमादपराणां च, नैव तेषां कदर्थकौ ॥ ६३६ ॥ युग्मम् । योऽप्यन्तरायनामायं, राजा पञ्चनरसंस्थितः । दानादिविघ्नहेतुस्ते, मया पूर्वं निवेदितः ॥ ६३७ ॥ निराशानां निरीहानां, दायिनां वीर्यशालिनाम् । तेषां भद्र! मनुष्याणां, सोऽपि किं किं करिष्यति ? ॥६३८॥ युग्मम् । अन्येऽपि ये भटा दुष्टा, या नार्यो ये च डिम्भकाः । केचिदत्र बले तेऽपि, न तेषां भद्र! बाधकाः ॥ ६३९ ॥ एते तु भूपाश्चत्वारः, सप्तानां मध्यवर्तिनः । तेषां भोः सुन्दराण्येव, सर्वकार्याणि कुर्वते ॥ ६४० ॥ ततश्च—इदं निर्जित्य वीर्येण, तेऽन्तरङ्गबलं जनाः । तिष्ठन्ति सततानन्दा, निर्बाधाः शान्तचेतसः ॥ ६४१ ॥ ससाधनयुतो यस्मान्महामोहनराधिपः । अयमेव बहिर्लोके, परत्रेह च दुःखदः ॥ ६४२ ॥ एवं च स्थिते—सद्भावभावनास्त्रेण, यैः स एष वशीकृतः । कुतो दुः-

सोऽभूवस्तेषां ?, निर्दग्धा सुखप्रवृत्तिः ॥६४३॥ केवलं तादृशास्तात, बहिरङ्गेषु देहिषु । अत्यन्तविरला लोकास्तेनेदं गीयते जनैः ॥६४४॥ शैले शैले न माणिक्यं, मौक्तिकं न गजे गजे । साधवो न हि सर्वत्र, चन्दनं न वने वने ॥ ६४५ ॥ तदेवं कथितं तुभ्यं, सन्ति ते यादृग्देहिनः । केवलं विरला राज्ञां, येऽमीषां दर्पनाशिनः ॥ ६४६ ॥ प्रकर्षः प्राह—हे माम, कुत्र तिष्ठन्ति देहिनः । यैरीदृशोऽपि विक्षिप्तः, शत्रुवर्गो महात्मभिः ? ॥ ६४७ ॥ विमर्शेनाभिहितं—वत्स ! समाकर्णय साम्प्रतं श्रुतं मयाऽऽप्तजनसकाशात्पूर्वं यदुत—अस्ति समस्तदुःखान्वसन्तानाधारविस्तारमनादिनिधनं भूरिप्रकारावृतभूमितलं भवचक्रं नाम नगरं, अतिविस्तीर्णतया च तस्य नगरस्य विद्यन्ते तत्र बहून्यवान्तरपुराणि, सन्ति बहुतराः पाटकाः, सम्भवन्ति बहुतमा भवनपङ्क्तयः, समाभ्यन्ते भूयांसि देवकुलानि, समुत्पातीताश्च नाना-जातयस्तत्र लोकाः प्रतिवसन्ति, ततोऽहमेवं वितर्कयामि यदुत—विद्यन्ते तत्र भवचक्रनगरे बहिरङ्गलोकाः यैरेष महामोहनरेन्द्रप्रमुखः शत्रुवर्गः स्ववीर्येण विक्षिप्त इति ॥ प्रकर्षः प्राह—माम ! तत् किमन्तरङ्गं तन्नगरं ? किं वा बहिरङ्गमिति ?, विमर्शेनोक्तं—तात ! न शक्यते तदेकपक्षनिक्षेपेणावधारयितुं यथाऽन्तरङ्गं यदि वा बहिरङ्गमिति, यस्मात्तत्र यथा बहिरङ्गजनास्तथैतेऽपि सर्वेऽन्तरङ्गलोका विद्यन्ते, यतोऽमीषां प्रतिपक्षभूतोऽसौ सन्तोषस्तत्रैव नगरे श्रूयते, ततोऽमीभिरनुविद्धं समस्तं नगरं, प्रकर्षेणोक्तं—नन्वमी अत्र वर्तमानाः कथं तत्र विचरेयुः ?, विमर्शेनोक्तं—तात ! योगिनः खल्वेते महामोहराजादयः सर्वेऽप्यन्तरङ्गलोकाः तस्मादत्रापि दृश्यन्ते तत्रापि वर्तन्ते, न कश्चिद्विरोधः, यतो जानन्ति यथेष्टबहुविधरूपकरणं कुर्वन्ति परपुरप्रवेशं समाचरन्ति चान्तर्धानं पुनः प्रकटीभवन्ति यथेष्टस्थानेषु, ततोऽचिन्त्यमाहात्म्यातिशयाः खल्वेते राजानः, ते यथाकामचारितया कुत्र न विचरेयुः ?, तस्मादुभयलोकाधारतयोभयरूपमेवैतद्भद्र ! भवचक्रं नगरं ॥ प्रकर्षेणोक्तं—तर्हि यदि तत्र सन्तोषो वर्तते ते चामीषां भूभुजां दर्पोद्दलनकारिणो महात्मानो लोका विद्यन्ते ततो

द्रष्टव्य तमगरं, महन्मे कुतूहलं अनुग्रहेण दर्शयतु माम! गच्छावस्तावत्तत्रैव नगरे, विमर्शेनोक्त—ननु सिद्धमिदानीमावयो समीहितं, दृष्टो विषयाभिलाषो मम, निश्चितमस्य रसनाजनकस्य, अतोऽवगता तस्य सम्बन्धिनी मूलशुद्धि, सपादित राजशासन, अत किमधु नाऽन्यत्र गतेन ?, स्वस्थानमेवावयोर्गन्तु युक्त, प्रकर्षेणोक्त—माम! मैव वोच, यतो वर्णितं भवचक्रव्यतिकर वर्णयता भवता मम तद्-दर्शनकौतुकं, ततो नादर्शितेन तेन गन्तुमर्हति मामः, एतच्चावयो कालतः संवत्सरमात्रमवधिस्तातेन, निर्गतयोश्चाद्यापि शरद्धेमन्तलक्षण मृतुद्वयमात्रमतिक्रान्त, यतोऽधुना शिशिरो वर्तते, तथाहि—पश्यतु मामो मञ्जरीबन्धुरा वर्तन्ते साम्प्रत प्रियङ्गुलता, विकासहासनिर्भरा विराजन्तेऽधुना रोध्रवृक्षा, विदलितमुकुलमञ्जरीकमिदानीं विभाति तिलकवनं, अपि च—शिशिरतुषारकणकनिर्दग्धमशेषसरोजषण्डं, सह किसलयविलाससुभगेन महावरकाननेन भोः!। पथिकगण च शीतवातेन विकम्पितगात्रयष्टिक, ननु खलसदृश एष तोपादिव हसति कुन्दपादपः ॥ १ ॥ नूनमत्र शिशिरे विदेशगाः, सुन्दरीविरहवेदनातुराः । शीतवातविहता क्षणे क्षणे, जीवितानि रहयन्ति मूढकाः ॥ २ ॥ पश्य माम! कृतमुत्तरायणं, भास्करेण परिवर्धितं दिनम् । शर्वरी च गमितेपदूनतां, पूर्वरात्रिपरिमाणतोऽधुना ॥ ३ ॥ बहलागरुधूपवरेऽपि गृहे, वररल्लककम्बलतूलियुते । बहुमोहनृणां शिशिरेऽत्र सुखं, न हि पीनकुचेललनाविरहे ॥ ४ ॥ अथापि वर्धित तेजो, महत्त्व च दिवाकरे। अथवा—विमुक्तदक्षिणाशे किं, म्लानिलाघवकारणं? ॥ ५ ॥ कार्यभारं महान्त निजस्वामिनो, यान्त्यनिष्पन्नमेते विमुच्याधुना । पश्य माम! स्वदेशेषु दुःसेवकाः, शीतभीता समायोकुपोष्माशया ॥ ६ ॥ ये दरिद्रा जराजीर्णदेहाश्च ये, मातला ये च पान्था विना कन्यया । भोः कदा शीतकालोऽपगच्छेदयं, माम! जल्पन्ति ते शीतनिर्वेदिता ॥ ७ ॥ यावमश्चादिमत्स्याय लोलूयते, भूरिलोक तुषारं तु रोदूयते । दुर्गतापत्यवृन्दं तु रोरूयते, जम्बुकः केवल माम! कोकूयते ॥ ८ ॥ वहन्ति यन्त्राणि महेक्षुपीडने,

छिमेन क्षीवा च तडागपद्धतिः । जनो महामोहमहत्तमाज्ञया, तथापि तां धर्मधियाऽवगाहते ॥ ९ ॥ अन्यच्च—अथ हि क्षत्रिप्रायो, वर्तते शिशिरोऽधुना । तत षण्मासमात्रेऽपि, किमु प्रसति मामकः ? ॥ १० ॥ गम्यता भवचक्रेऽतो, ममानुग्रहकाम्यया । मामेन परतो यत्ते, रोचते तत्करिष्यते ॥ ११ ॥ अनिवर्तकनिर्बन्धमेवं विज्ञाय मातवः । ततस्तदनुरोधेन, विमर्शो गन्तुमुद्यतः ॥ १२ ॥ अथ मिथ्या-निवेशादिसन्नप्रासादसुन्दरम् । ममत्वादिगजस्तोमगलगर्जितबन्धुरम् ॥ १३ ॥ अज्ञानादिमहाश्वीयहेषारवमनोहरम् । दैन्यचापल-लौल्यादिपादातपरिपूरितम् ॥ १४ ॥ महामोहनरेन्द्रस्य, चतुरङ्गं महाबलम् । अपसृत्य ततः स्थानात्ताभ्यां सर्वं विलोकितम् ॥ १५ ॥ ततो निर्णीतमार्गेण, हृष्टौ स्वस्रीयमातुलौ । गच्छतस्तत्पुरं तूर्णमविच्छिन्नप्रयाणकैः ॥ १६ ॥ मार्गोत्तारणकामेन, मातुल प्रति भाषितम् । ततः प्रकर्षसञ्ज्ञेन, सदैव पथि गच्छता ॥ १७ ॥—माम ! यः श्रूयते लोके, सार्वभौमो महीपतिः । स कर्मपरिणामाख्यः, प्रतापाक्रान्तराजकः ॥ १८ ॥ तस्य सम्बन्धिनीमाज्ञां, महामोहनराधिपः । किमेष कुरुते ! किं वा, नेति मे संशयोऽधुना ॥ १९ ॥ विमर्शः प्राह—नैवास्ति, भद्र ! भेदः परस्परम् । अनेन परमार्थेन, स हि ज्येष्ठः सहोदर ॥ २० ॥ अय पुनः कनिष्ठोऽस्या, महाटव्या व्यवस्थितः । यतोऽय चरटप्रायो, महामोहनराधिपः ॥ २१ ॥ ये दृष्टा केचिदस्माभे, भवताऽत्र महीभुजः । समस्ता अपि विज्ञेयास्ते तस्यापि पदातयः ॥ २२ ॥ केवलं—स कर्मपरिणामाख्य , सुन्दराणीतराणि च । कार्याणि कुरुते लोके, प्रकृत्या सर्वदेहिनाम् ॥ २३ ॥ अय तु सर्वलोकानां, महामोहनरेश्वरः । करोत्यसुन्दराण्येव, कार्याणि ननु सर्वदा ॥ २४ ॥ अन्यच्च—अय जिगीषुर्भूपालः, स राजा नाटकप्रियः । एते भूपा निषेवन्ते, महामोहमतः सदा ॥ २५ ॥ किं तु लोके महाराजो, यतोऽस्यापि महत्तमः । स कर्मपरिणामाख्यो, भ्रातेति परिकीर्तितः ॥ २६ ॥ तस्मादेते महीपालास्तस्यापि पुरतः सदा । गत्वा गत्वा प्रकुर्वन्ति, नाटकं हर्षवृद्धये ॥ २७ ॥ भवन्ति गा-

यना। केचित्केचिदातोद्यवादकाः । वादित्ररूपतामेव, भजन्ते भक्तितोऽपरे ॥ २८ ॥ किं बहुना ?—महामोहनरेन्द्राद्याः, सर्वेऽमी तात! भूभुजः । सर्वेषां हेतुतां यान्ति, तत्र संसारनाटके ॥ २९ ॥ स तावन्मात्रसंतुष्टः, सपत्नीको नराधिप । तदेव नाटकं पश्यन्नित्यमास्ते निराकुलः ॥ ३० ॥ अन्यच्च—एतेषां तावदस्त्येव, सर्वेषां स प्रभुर्नृपः । अन्येषामपि स स्वामी, प्रायेणान्तरभूभुजाम् ॥ ३१ ॥ किं बहुना ?—स सर्वसमुदायात्मा, सुन्दरेतरनायकः । अयं सर्वैकदेशात्मा, तदादेशविधायकः ॥ ३२ ॥ तथाहि—येऽन्तरङ्गजना केचिद्विद्यन्ते सुन्दरेतराः । स कर्मपरिणामाख्यस्तेषां प्राय प्रवर्तकः ॥ ३३ ॥ यावन्ति चान्तरङ्गाणि, निर्वृतिं नगरीं विना । पुराणि तेषु स स्वामी, बहिरङ्गेषु भावतः ॥ ३४ ॥ अथ पुनर्महामोहो, यावन्तोऽत्र विलोकिताः । भवता भूभुजः स्वामी, तदादेशेन तावताम् ॥ ३५ ॥ यदेष निजवीर्येण, किञ्चिदर्जयते धनम् । समर्पयति तत्तस्य, निःशेषं नतमस्तकः ॥ ३६ ॥ अनेनोपार्जितस्योच्चैर्धनस्य विनियोजनम् । स राजा कुरुते नित्यं, सुन्दरेतरवस्तुषु ॥ ३७ ॥ अयं हि विग्रहारूढः, सदाऽऽस्ते विजिगीषया । स तु भोगपरो राजा, न जानात्येव विग्रहम् ॥ ३८ ॥ एवं च स्थिते—एष वत्स! करोत्याज्ञां, भक्तिनिर्भरमानसः । तस्य किं तु ततो भिन्नं, नात्मानं मन्यते नृपः ॥ ३९ ॥ अन्यच्च—यद्दृष्टं भवता पूर्वं, महामोहपुरद्वयम् । तत्कर्मपरिणामेन, भटमुख्याऽस्य योजितम् ॥ ४० ॥ अतः पुरद्वये तत्र, सैन्यमस्य सुभक्तिकम् । तयाऽटव्यां च निःशेषमास्ते विग्रहतत्परम् ॥ ४१ ॥ प्रकर्षः प्राह मामेदमनयोः किं क्रमागतम् । राज्यं? किंवाऽन्यसम्बन्धि, गृहीतं बलवत्तया ॥ ४२ ॥ विमर्शेनोदितं वत्स!, नानयोः क्रमपूर्वकम् । परसत्कमिदं राज्यं, हठादाभ्यां विनिर्जितम् ॥ ४३ ॥ यतः—जीवः सकर्मको यस्ते, बहिरङ्गजनस्तथा । संसारिजीव इत्येव, मया पूर्वं निवेदितः ॥ ४४ ॥ तस्यैषा भुज्यते सर्वा, चित्तवृत्तिमहाटवी । वीर्येण तं बहिष्कृत्य, स्वीकृताऽऽभ्यां न संशयः ॥ ४५ ॥ प्रकर्षेणोक्तम्—कियान् कालो गृहीतायाः, वर्तते माम! मे वद ।

विमर्शः प्राह—नैवार्य, जानेऽहमपि तत्त्वतः ॥ ४६ ॥ तदेष परमार्थस्ते, कथ्यते वत्स ! साम्प्रतम् । निःशेषं प्रलयं याति, येन तात कलाशयः ॥ ४७ ॥ स कर्मपरिणामाख्यो, दानोद्दालनतत्परः । प्रणताशेषसामन्तकिरीटस्फुरिताधरः ॥ ४८ ॥ प्रभावमात्रसंसिद्धकार्यविस्तारसुस्थितः । राजाधिराज सर्वत्र, निविष्टो विष्टपाधिपः ॥ ४९ ॥ युग्मम् ॥ अय पुनर्महामोहस्तत्सैन्यपरिपालकः । तद्बलमक्षसैन्यञ्च, तत्कोशपरिवर्धकः ॥ ५० ॥ तदावेसकरो नित्यं, तथापि गुरुपौरुष । नूनं च पालयत्येष, राजकार्यं यथेच्छया ॥ ५१ ॥ तेनैष लौकिकीं वाचोयुक्तिमाश्रित्य पण्डितैः । महासननिविष्टोऽपि, ऊर्ध्वो राजा निगद्यते ॥ ५२ ॥ नानानयोर्भिद्यते तात !, तस्मात्कैवः परस्परम् । यस्मादेकमिदं राज्यमेतत्तुभ्यं निवेदितम् ॥ ५३ ॥ प्रकर्षः प्राह मे माम !, विनष्टः संशयोऽधुना । अथवा त्वयि पार्श्वस्थे, कुत सन्देहसम्भवः ? ॥ ५४ ॥ तदेवविधसञ्जल्पकल्पनाऽपगतश्रमौ । तौ विलस्य विनैर्मार्गं, भवचक्रे परागतौ ॥ ५५ ॥ इतश्च परिपाट्यैव, शिशिरो लङ्घितस्तदा । सम्प्राप्तश्च जनोन्मादी, वसन्तो मन्मथप्रिय ॥ ५६ ॥ स ताभ्यां नगरासन्ने, भ्रमद्भ्यामलीलया । वसन्तकाननेपूर्वैः, कीदृश प्रविलोकितः ? ॥ ५७ ॥ यदुत—नृत्यन्निव दक्षिणपवनवशोद्वेल्लमानकोमललतावाहुदण्डैर्गायन्निव मनोज्ञविहङ्गकलकलविरुतैर्महाराजाधिराजप्रियवयस्यकमकरकेतनस्य राज्याभिषेके जयजयशब्दमिव कुर्वाणो मत्तकलकोकिलाकुलकोलाहलकण्ठकूजितैस्तर्जयन्निव विलसमानपरपूतैककलिकातर्जनीभिः पकारयन्निव रक्ताशोककिसलयपल्लवितसरलकरविलसितैः प्रणमन्निव मलयमारुतान्दोलितनमच्छिखरमहातरूत्तमाङ्गैर्हसन्निव नवविकसितकुसुमनिकराट्टहासैः रुदन्निव त्रुटितवृन्तबन्धननिपतमानसिन्दुवारसुमनोनयनसलिलैः पठन्निव शुकसारिकास्फुटाक्षरोल्लापजल्पितेन सोत्कण्ठक इव माधवीमकरन्दबिन्दुसन्दोहास्वादनमुदितमत्तमधुकरकुलझणझणायितनिर्भरतया । अपि च—इति नर्तनरोदनगानपरः, पवनेरितपुष्पजधूलिधरः । स वसन्तऋतुर्बहुरूपकरः, कलितो नगरोपवनान्तचरः ॥ १ ॥ ततो विमर्श-

नम् । उच्छृङ्खला पुनर्वत्स !, वमेषा बन्धयत्यलम् ॥ ७ ॥ तदस्य विकथामूलं, दुर्माध्यव्यसने फलम् । इदमीदृशमापन्नं, परलोके च दु-
गैति ॥ ८ ॥ अत्रान्तरे प्रकर्षेण, राजमार्गे निपातिता । दृष्टिर्दृष्टश्च तत्रैक , शुक्लवर्णाम्बरो नरः ॥ ९ ॥ ततः पप्रच्छ स वीक्ष्य, क एष
इति मातुलम् । तेनोक्तं वत्स ! हर्षोऽयं, रागकेसरिसैनिकः ॥ १० ॥ अस्त्यत्र मानवावासे, वासवो नाम वाणिज । इद च दृश्यते-
ऽभ्यर्णे, तस्य गेहं महाधनम् ॥ ११ ॥ बालकाले वियुक्तश्च, वयस्योऽत्यन्तवल्लभः । धनदत्तः समायातो, वासवानन्ददायकः ॥ १२ ॥
इदं कारणमुद्दिश्य, भवनेऽत्र प्रवेक्ष्यति । अथ हर्षे प्रविष्टश्च, पश्य किं किं करिष्यति ? ॥ १३ ॥ ततो विस्फारिताक्षोऽसौ, प्रकर्षस्त
निरीक्षते । इतश्च वासवस्तेन, धनदत्तेन मीलितः ॥ १४ ॥ ततः प्रविष्टस्तद्देहे, स हर्षे सकुटुम्बके । सजात च वणिग्गेहं, हृद्यानन्द-
सुन्दरम् ॥ १५ ॥ आहूता बान्धवाः सर्वे, प्रवृत्तश्च महोत्सवः । ततो गायन्ति नृत्यन्ति, वादितानन्दमर्दलाः ॥ १६ ॥ अपि च—
वरभूषणमुज्ज्वलवेषधरं, प्रमदोद्धुरखादनपानपरम् । धनदत्तसमागमजातसुखं, तदभूदय वासवगेहसुखम् ॥ १७ ॥ अथ तादृशि विस्म-
यसञ्जनके, क्षणमात्रविवर्धितवर्धनके । निजमाममवोचत बुद्धिसुत , प्रविलोकनकौतुकतोषयुत ॥ १८ ॥ यदिद वेद्ध्वे माम !, सर्वमर्त्य-
वितर्पकम् । वासवीयगृहं तत्किं, तेन हर्षेण नाटितम् ? ॥ १९ ॥ विमर्शेनोदितं—वत्स !, साधु साधु विनिश्चितम् । अकाण्डसदनक्षोभे,
हर्षे एवात्र कारणम् ॥ २० ॥ अत्रान्तरेऽतिबीभत्सः, कृष्णवर्णधरो नरः । दृष्टो द्वारि प्रकर्षेण, तस्य वासवसद्मनः ॥ २१ ॥ ततस्तेनो-
दित माम !, क एष पुरुषाधमः ? । विमर्शेनोक्तम्—वत्स ! शोकवयस्योऽयं, विषादो नाम दारुण ॥ २२ ॥ यश्चैष पथिक कश्चि-
त्प्रवेष्टुमिह वाञ्छति । प्रविष्टेऽत्र विषादोऽयं, भवनेऽत्र प्रवेक्ष्यते ॥ २३ ॥ ततः प्रविश्य पान्थेन, तेन वासवसन्निधौ । एकान्ते वास
वस्यैव, गुह्यं किञ्चिन्निवेदितम् ॥ २४ ॥ अत्रान्तरे प्रविष्टोऽसौ, विषादस्तच्छरीरके । मूर्च्छया पतितश्चासौ, वासवो नष्टचेतन ॥ २५ ॥

पुष्पसेवद्धिमाल्यवाम् ॥ ५५ ॥ फलं तु नरके घोरे, स्यादेवंविधकर्मणाम् । तथापि मूढाः खादन्ति, मांसं हिंसन्ति देहिनः ॥ ५६ ॥ राम
राजपुरुषैर्जिह्वामुत्पाट्य दारुणैः । तत्र तात नर कश्चित्पाप्यमानो निरीक्षित ॥ ५७ ॥ ततो दयापरीतात्मा, प्रकटं प्राह मातुलम् ।—
हा हा किमेष पुरुषो, निर्घृणैर्मांस' पीड्यते ? ॥ ५८ ॥ विमर्शेनोक्त—भद्राकर्णय, अयं पुरुषोऽत्रैव मानवावासान्तर्भूते चणकपुरे वा-
स्तव्यो महाधनः मुमुखो नाम सार्थवाह', अयं च बालकालादारभ्य वाक्पारुष्यव्यसनी, ततो लोकैर्गुणनिष्पन्नमस्य दुर्मुख इति नाम
प्रतिष्ठित, प्रकृत्यैव चास्य प्रतिभासते स्त्रीकथा रोचते भक्तकथा मनोऽभीष्टा राजकथा हृदयिता देशकथा, सर्वथा जल्पे मतिं न कथ-
ञ्चिज्जतुल्य धारयितुं पारयति । इतश्च चणकपुराधिपतिरेव तीव्रो नाम राजा गतो रिपूणामुपरि विक्षेपेण लब्धमायोधनं जिता रि-
पवः, इतश्च निर्गते तस्मिन्नास्थायिकायां प्रस्तुताऽनेन राजकथा यदुत—प्रबलास्ते रिपवः, पराभविष्यन्ति राजानं, आगमिष्यन्ति ते
पुरलुण्टनार्थं, ततो यथाशक्त्या पलायध्वं यूयं, तदाकर्ण्य नष्टं समस्तं पुरं, समागतो राजा, दृष्टं तथाभिरुद्वसं चणकपुरं, किमेतदिति पृष्ट-
मनेन, कथितः केनचिद्व्यतिकरः, कुपितो दुर्मुखस्योपरि तीव्रनरेन्द्रः, ततः पुनरावासिते पुरे प्रख्याप्य तं दुर्वचनभाषणलक्षणमपराधं
पौराणामेवंविधोऽस्य दण्डो निर्वर्तितो राज्ञेति । प्रकर्षेणोदित माम', महाकष्टकमीदृशम् । यद्भाषणमात्रेण, सम्प्राप्तोऽयं वराकक ॥ १ ॥
मातुलेनोदित वत्स', विकथाऽऽसक्तचेतसाम् । अनियन्त्रितमुण्डानां, कियदेतद्दुरात्मनाम् ? ॥ २ ॥ इयं हि कुरुते वैरं, देहिनां निर्नि-
मित्तकम् । विधत्ते जनसन्ताप, मुत्कला भद्र' भारती ॥ ३ ॥ ते धन्यास्ते महात्मानस्ते श्लाघ्यास्ते मनस्विनः । ते मान्यास्ते हताशास्ते,
ते जगत्यमृतोपमाः ॥ ४ ॥ येषां मिताक्षरा सत्या, जगदाह्लादकारिणी । काले सद्बुद्धिपूता च, वर्तते भद्र ! भारती ॥ ५ ॥ युग्मम् ।
ये तु मुत्कलवाणीका, वदन्त्येवं विवर्धकम् । वैरस्त्रैव महानर्था, नेदृशा वत्स ! दुर्लभाः ॥ ६ ॥ सुश्लिष्टा मोचयत्येषा, भारती तात' देहि-

नीत्वा पल्लिं ततोऽनेकयातनाशतपीडितः । स चौरैर्विहितो वत्स!, वर्धनो धनवाञ्छया ॥ ४५ ॥ अथ च पुरुषस्तस्य, सर्वदा पादधावकः । वत्स! लम्बनको नाम, गृहजो दासदारकः ॥ ४६ ॥ ततस्तं तादृशं दृष्ट्वा, स्वामिनं चौरपीडितम् । नष्ट्वा कथञ्चिदायातो, वृत्तान्तस्य निवेदकः ॥ ४७ ॥ निवेदिते च वृत्तान्ते, तथा वासववाणिजः । यदकार्षीत्त्वया तच्च, दृष्टमेव ततः परम् ॥ ४८ ॥ प्रकर्षेणोदितं माम!, प्रलापाक्रन्दरोदनैः । किममीभिः परित्राणं, तस्य संजनितं कृतैः? ॥ ४९ ॥ विमर्शेनोदितं वत्स!, नैतदेव तथापि च । एवमेते प्रकुर्वन्ति, विषादेन विनाटिताः ॥ ५० ॥ धनदत्तागमं प्राप्य, ये हर्षवशवर्तिनः । वर्धनापदमासाद्य, विषादेन विनाटिता ॥ ५१ ॥ तेषां हर्षविषादाभ्यामेतेषां पीडितात्मनाम् । कीदृशी वा भवेत्तात!, पर्यालोचितकारिता? ॥ ५२ ॥ ततश्च—अवीक्ष्य वस्तुनस्तत्त्वमनालोच्य हिताहितम् । एते विडम्बयन्त्येवमात्मानं तद्वशानुगाः ॥ ५३ ॥ किंच—नात्र केवलमीदृक्षं, वासवीये गृहोदरे । आभ्यां हर्षविषादाभ्यां, प्रेक्षणं वत्स! नाट्यते ॥ ५४ ॥ किं तर्हि?—सर्वत्र भवचक्रेऽस्मिन्, कारणैरपरापरैः । एतौ नर्तयतो नित्यं, जनमेनं गृहे गृहे ॥ ५५ ॥ यतः—पुत्रं राज्यं धनं मित्रमन्यद्वा सुखकारणम् । हर्षस्यास्य वशं यान्ति, प्राप्यास्मिन् मूढजन्तवः ॥ ५६ ॥ ततस्ते तत्परायत्ताः, सद्बुद्धिविकला नराः । वत्स! किं किं न कुर्वन्ति, हास्यस्थानं विवेकिनाम्? ॥ ५७ ॥ न चिन्तयन्ति ते मूढा, यथेदं पूर्वकर्मणा । पुत्रराज्यादिकं सर्वं, जन्तूनामुपपद्यते ॥ ५८ ॥ ततः कर्मपरायत्ते, तुच्छे बाह्येऽतिगत्वरे । कथञ्चित्तत्र संपन्ने, हर्षः स्यात्केन हेतुना? ॥ ५९ ॥ तथा—विषादेन च बाध्यन्ते, वियोगं प्राप्य वल्लभैः । अनिष्टैः संप्रयोगं च, नानाव्याधिशतानि च ॥ ६० ॥ बाधिताश्च विषादेन, सदाऽमी मूढदेहिनः । आक्रन्दनं मनस्तापं, दैन्यमेव च कुर्वते ॥ ६१ ॥ न पुनर्भावयन्त्येव, यथेदं पूर्वसञ्चितैः । कर्मभिर्जनितं दुःखं, विषादावसरः कथम्? ॥ ६२ ॥ अन्यच्च—विषादो वर्धयत्येव, तद्दुःखं तात! देहिनाम् । न त्राणकारकस्ताण,

हा हा किमेतदित्युच्चैर्विलपन्मिलितो जनः । तत समागतस्तस्य, निकटे भयविह्वलः ॥ २६ ॥ अथ वायुप्रदानाद्यैः, पुनः सजातचेतन । प्रलापं कर्तुमारब्धः, सविषादः स वासवः ॥ २७ ॥ कथम्?—हा पुत्र! तात वत्सातिसुकुमारशरीरक । ईदृशी तव सजाता, काऽवस्था मम कर्मणा? ॥ २८ ॥ निर्गतोऽसि ममापुण्यैर्वत्स! वारयतो मम । दैवेन निर्घृणेनेव, वध जात! विनिर्मितम् ॥ २९ ॥ हा हतोऽस्मि निराशोऽस्मि, मुषितोऽस्मि विलक्षयः । एव व्यवसिते वत्स!, त्वयि किं मम जीवति? ॥ ३० ॥ यावच प्रलपत्येष, स पुत्रशोकातुरः । तावद्विषादः सर्वेषु, प्रविष्ट स्वजनेष्वपि ॥ ३१ ॥ अथ ते तस्य माहात्म्यात्सर्वे वासवबान्धवाः । हाहारवपरा गाढ, प्रलाप कर्तुमुद्यताः ॥ ३२ ॥ ततश्च—क्षणेन विगतानन्द, दीनविह्वलमातुरम् । रुदभारीजन भूत, जात वासवमन्दिरम् ॥ ३३ ॥ ततस्तच्चार्त्तं दृष्ट्वा, प्रकर्षः प्राह मातुलम् । किमिद माम! सजात, गृहे तु प्रेक्षणान्तरम्? ॥ ३४ ॥ विमर्शः प्राह तद्गुम्यमाद्यावेव निवेदितम् । मया यथाऽन्तरायता, यहिरज्ञा इमे जनाः ॥ ३५ ॥ ततश्चैवं यथा पूर्व, हर्षेण प्रविनाटितम् । अधुना नाटयत्येव, विषादोऽसौ पराक्रमम् ॥ ३६ ॥ तदत्र भवने लोकाः, किं कुर्वन्तु तपस्विनः?। ये हि हर्षविषादाभ्या, क्षणार्धेन विनाटिताः ॥ ३७ ॥ प्रकर्षः प्राह किं गुप्तं, कर्णाभ्यर्णविवर्तिना । अनेन वासवस्यास्य, पुरुषेण निवेदितम्? ॥ ३८ ॥ विमर्शेनोदितं वत्स!, समाकर्णय साम्प्रतम् । मत्स्यस्य धर्धनो नाम, पुत्रो हृदयवल्लभः ॥ ३९ ॥ स चैक एव पुत्रोऽस्य, यौवनस्थो मनोहरः । उपयाचितकोटीभिर्जातो विनयतत्परः ॥ ४० ॥ मनेन वार्यमाणोऽपि, स धनार्जनकाम्यया । भविष्याय महासार्थं, गतो देशान्तरे पुरा ॥ ४१ ॥ स चोपार्ज्य धन भूरि, स्वदेशागमकामुकः । कादम्बर्या महाटव्यां, गृहीतो वत्स! तस्करैः ॥ ४२ ॥ विलुप्त धनसर्वस्व, हताः सार्थः सबान्धवाः । बद्धा गृहीता बन्याश्च, तस्करैर्धनकाङ्क्षिभिः ॥ ४३ ॥ तासां मध्ये गृहीतश्च, धर्धनः क्रूरकर्मभिः । स सार्थवाह इत्येवमादिभिर्भद्र! तस्करैः ॥ ४४ ॥

यदि त्वया । पुराणि विदित वत्स! भवचक्र ततोऽधुना ॥ ११९ ॥ अत्रान्तरे—आकर्ण्य मातुलीया तां, भारतीं भगिनीसुतः । अथा दापरतो दृष्टिं, भवचक्रे समन्ततः ॥ १२० ॥ ततो निःशेषतो वीक्ष्य, शारविस्फारितेक्षण । त्वरयोद्विग्नचेतस्को, निजगाद ससम्भ्रमः ॥ १२१ ॥ कथम्?—हा हा हा माम! दृश्यन्ते, कष्टा सप्त महेलिकाः । अमूर्या नगरेऽमुष्मिन्, दारुणाकारधारिका ॥ १२२ ॥ आक्रान्ताशेषधामानः, कृष्णा बीभत्सदर्शनाः । वेताल्य इव नाम्नाऽपि, लोककम्पविधायिकाः ॥ १२३ ॥ एता का किंप्रयुक्ता वा, किंवीर्याः किंपरिच्छदा । चेष्टन्ते कस्य वाधायै?, तथैवकृतनिश्चया ॥ १२४ ॥ इद मे सर्वमाख्यात, यावद्यापि नो त्वया । तावत्प्रतारण मन्ये, भवचक्रस्य वर्णनम् ॥१२५॥ अत समस्त मामोऽतो, ममामाख्यातुमर्हसि । विमर्शेनोदित—वत्स!, निबोध त्वं निवेद्यते ॥ १२६ ॥ जरा रुजा मृतिश्चेति, खलता च कुरूपता । दरिद्रता दुर्भगता, नामतोऽमूः प्रकीर्तिताः ॥ १२७ ॥ तत्र—सा कालपरिणत्याख्या, भार्या या मूलभूपते । तया प्रयोजिता तावज्जरेय भुवनोदरे ॥ १२८ ॥ बाह्यान्यपि निमित्तानि, वर्णयन्तीह केचन । अस्याः प्रयोजकानीति, लक्षणायानि मानवा ॥ १२९ ॥ वीर्यं पुनरदोऽमुष्या, यदाश्लेषेण देहिनाम् । हरत्यशेषसद्वर्णलावण्य बलशालिनाम् ॥ १३० ॥ गाढाश्लेषात्पुनर्वत्स!, विपरीतमनस्कताम् । कुरुते शोच्यतां लोके, देहिनां वीर्यशालिनाम् ॥ १३१ ॥ वलीपलितखालित्यपिङ्गुल्याङ्ककृशर्णताः । कम्पकर्कशिकाशोकमोहशैथिल्यदीनताः ॥ १३२ ॥ गतिभङ्गा व्यथाधिर्यदन्तवैकल्यरीणताः । जरापरिकर. प्रौढो, धायुरत्र बलाभणी ॥ १३३ ॥ अनेन परिवारेण, परिवारितविग्रहा । जरेय विलसत्यत्र, मत्तावद्धन्धहस्तिनी ॥ १३४ ॥ अधुना यस्य बाधायै, चेष्टते कृतनिश्चया । जरेयमेव त वत्स!, विपक्ष ते निवेदये ॥१३५॥ तस्या एव महादेव्या, विद्यतेऽनुचरः पर । यौवनाख्यो महावीर्यश्चण्डुदामपौरुष ॥ १३६ ॥ स च योगी सदावेशात्प्रविश्याङ्गेषु देहिनाम् । तनोति बलमौर्जित्य, बन्धुराकारतारितां ॥ १३७ ॥ किं च—विलासहा-

कथ्यमानं निबोध मे ॥ १०० ॥ “बुभुक्षारतिसन्तापपिपासावेदनातुराः । दाहशोकभयोद्वेगबन्धताडनपीडिताः ॥ १०१ ॥ सतत तु स्थिता
“लोका, धार्यन्तेऽत्र पुरेऽखिलाः । महामोहाग्निभिर्वत्स!, दीनाः शरणवर्जिताः ॥ १०२ ॥ धर्माधर्मविवेकेन, विकला कलुषात्मका ।
“तिष्ठन्त्यनन्तजातीयाः, पुरेऽत्र पुरुषाः किल ॥ १०३ ॥” तदिदं पशुसंस्थानं, वर्णितं ते महापुरम् । इदानीं वर्ण्यते वत्स!, तदिदं पापि-
पञ्जरम् ॥ १०४ ॥ येऽत्र लोका महापापप्राग्भारभरपूरिताः । वसन्ति तेषां दुःखस्य, नास्ति विच्छेदसम्भवः ॥ १०५ ॥ योऽसौ ते
वेदनीयाख्यनृपतेः पुरुषो मया । असातनामकः पूर्वं, वर्णितस्तत्र मण्डपे ॥ १०६ ॥ तस्यैव भो! महामोहराजेन निखिलं पुरम् । क-
थितोपचितपिण्डेन, भटभुक्त्या समर्पितम् ॥ १०७ ॥ ततस्तेन पुरे सर्वे, परमाधार्मिनामकैः । अत्र लोकाः कदर्थ्यन्ते, पुरुषैः स्वनियो-
जितैः ॥ १०८ ॥ कथम्?—“पाय्यन्ते तप्ततास्राणि, नीयन्ते क्षतचूर्णताम् । खाद्यन्ते निजमांसानि, दह्यन्ते तीव्रवह्निना ॥ १०९ ॥
“शाल्मलीरभिरोहन्ते, वज्रकण्टकसंकुलाः । तार्यन्ते क्लेशबहुलां, वत्स! वैतरणीं नदीम् ॥ ११० ॥ छिद्यन्ते करुणाहीनैरसिपत्रवनेरितैः ।
“कुन्ततोमरनाराचकरवालगदासवैः ॥ १११ ॥ पच्यन्ते कुम्भपाकेन, पाट्यन्ते क्रकचादिभिः । कलम्बवालुकापृष्ठे, भ्रज्यन्ते चणका इव
“॥ ११२ ॥ अन्यच्च—पाटकाः सन्ति सप्तात्र, तत्राद्ये पाटकत्रये । परमाधार्मिकैरित्थं, अन्यते दुःखपद्धतिः ॥ ११३ ॥ परस्परं च
“कुर्वन्ति, दुःखमेते निरन्तरम् । पट्सु पाटेषु भिद्यन्ते, सप्तमे वज्रकण्टकैः ॥ ११४ ॥ किं च—बुभुक्षया कदर्थ्यन्ते, प्रपीड्यन्ते पि-
“पासया । काष्ठीभवन्ति शीतेन, वेदनावेगविह्वलाः ॥ ११५ ॥ क्षणेन द्रवतां यान्ति, क्षणेन स्थिररूपताम् । क्षणेन च विलीयन्ते, गृ-
ह्णन्ति च शरीरकम् ॥ ११६ ॥” न शक्तः कोटिजिह्वोऽपि, दुःखं वर्णयितुं जनः । वसतामत्र लोकानां, यादृशं पापिपञ्जरे ॥ ११७ ॥
एकान्तदुःखगर्भार्थं, तदिदं पापिपञ्जरम् । कथितं ते समासेन, पुरं वत्स! मयाऽधुना ॥ ११८ ॥ तस्मादेतानि चत्वारि, विख्यातानि

नीरोगता नाम, वेदनीयाख्यभूपतेः । पदातिनेह सातेन, प्रयुक्ता भवचक्रके ॥ १५७ ॥ सा वर्णबलसौन्दर्यधीधृतिस्मृतिपाटवे । परीता कुरुते लोकं, सुखसन्दर्भनिर्भरम् ॥ १५८ ॥ तां चैषा दारुणा हत्वा, क्षणान्नीरोगतां रुजा । प्रवर्तयति लोकानां, तीव्रार्तिं तनुचित्तयो ॥ १५९ ॥ तेनेयं तद्विघाताय, रुजेत्थ वत्स! वल्गते । एतदाक्रान्तमूर्तीनां, चेष्टाऽऽस्यास्तु न पार्यते ॥ १६० ॥ तथाहि—कूजन्ति करुणध्वानैः, क्रन्दन्ति विकृतस्वराः । रुवन्ति दीर्घपूत्कारैरारटन्ति सविह्वलाः ॥ १६१ ॥ गाढं दीनानि जल्पन्ति, रुण्टन्ति च मुहुर्मुहुः । लुठन्तीतस्ततो मूढाश्चेतयन्ते न किञ्चन ॥ १६२ ॥ नित्यमार्ताः सदोद्विग्ना, विज्ञाताशरणवर्जिता । भयोद्भ्रान्तधियो दीना, नरकेष्विव नारकाः ॥ १६३ ॥ भवन्ति भवचक्रेऽत्र, सत्त्वाः पापिष्ठयाऽनया । हत्वा नीरोगतां वत्स!, रुजया परिपीडिताः ॥ १६४ ॥ तदेषा लेशतो वत्स!, रुजा ते गदिता मया । मृतिर्मदीयविश्लेय, साम्प्रतं ते निवेद्यते ॥ १६५ ॥ योऽसौ ते दर्शितः पूर्वमायुर्नामा महीपतिः । चतुर्नरपरीवारस्तत्क्षयोऽस्याः प्रयोजकः ॥ १६६ ॥ प्रयुज्यते विचित्रैश्च, बहिरङ्गैश्च शतैरियम् । विषाग्निशस्त्रपानीयगिरिपातातिसाध्वसैः ॥ १६७ ॥ बुभुक्षाव्याधिदुर्ध्यानपिपासोष्णहिमश्रमैः । वेदनाहारदुर्ध्यानपराघातारतिश्रमैः ॥ १६८ ॥ प्राणापानोपरोधाद्यैः, किं तु वैरप्युदीरिता । तमेवायुःक्षयं प्राप्य, मृतिरेषा विवल्गते ॥ १६९ ॥ वीर्यं पुनरदोऽमुष्या, यदियं देहिनां क्षणात् । हरत्युच्छ्वासनिश्वासं, चेष्टां भाषां सचेतनाम् ॥ १७० ॥ विधत्ते रक्तनिर्नाशं, वैकल्यं काष्ठभूततां । दौर्गन्ध्यं च क्षणादूर्ध्वं, स्वपनं दीर्घनिद्रया ॥ १७१ ॥ परिवारस्तु नास्त्यस्या, न चैव तमपेक्षते । इयं हि तीव्रवीर्येण, सदैका किमनुप्लिका ॥ १७२ ॥ यतोऽस्या नाममात्रेण, भुवनं सचराचरम् । सनरेन्द्रं सदेवेन्द्रं, कम्पते त्रस्तमानसम् ॥ १७३ ॥ सद्वीर्यबलभाजोऽपि, प्रभवोऽपि जगत्त्रये । आसन्नामपि मर्त्यानां, भवन्ति भयकातराः ॥ १७४ ॥ अत ! परिच्छदेनास्यास्तात! किं वा प्रयोजनम्? । एकिकापि करोत्येषा, दूरे यच्छ्रूयतेऽद्भुतम् ॥ १७५ ॥ अत

सविष्वोकविपर्यासपराक्रमे । मस्तानोद्भवनोल्लासलासधावनसम्मदे ॥ १३८ ॥ गर्वशौण्डीर्यसंरम्भत्वसाहमादिभिरद्भो । पुरु पराग-
भिर्लोकैर्लीळया स विजृम्भते ॥१३९॥ तत्सम्बन्धवशी भोगसम्भोगसुखनिर्भरम् । आत्मान मन्यते लोका, भयपकनिनामिन ॥१४०॥
ततस्त निजवीर्येण, यौवनास्त्रमिव जरा । मज्जाति सपरीवारं, क्रुद्धा कृत्येव साधकम् ॥ १४१ ॥ ततस्ते जरसा वत्स!, जना मर्दितयौ-
वनाः । पतीता दुःखकोटीभिर्जीयन्ते दीनविह्वलाः ॥ १४२ ॥ समार्यया ऽप्यवज्ञाताः, परिवारावधीरिताः । उत्प्रास्यमाना शापत्यैस्त-
नीभिस्तिरस्कृताः ॥ १४३ ॥ स्मरन्त पूर्वसुखानि, कासमाना मुहुर्मुहुः । श्लेष्माणमुद्गिरन्तश्च, लुठन्तो जीर्णमञ्चके ॥ १४४ ॥ परग-
तिपराः प्रायः, कुप्यन्तश्च पदे पदे । आक्रान्ता जरया वत्स!, केवल शेरते जनाः ॥ १४५ ॥ युग्मम् । एषा जरा समासेन, लोकपीड-
नतत्परा । वर्णिता तेऽधुना वक्ष्ये, रुजां वैवस्वतीं भुजाम् ॥ १४६ ॥ यो वेदनीयनृपतेरसातास्यो वयस्यक । वर्णितस्तत्प्रमुखेय, रुजा
तेन दुरात्मना ॥ १४७ ॥ वर्णयन्ति निमित्तानि, बहिर्भूतानि सूरयः । अस्याः प्रयोजकान्युच्चैर्नानाकाराणि शास्त्रत ॥ १४८ ॥ धीधृ-
तिस्मृतिविभ्रंशः, सम्प्राप्ति कालकर्मणाम् । असात्म्यार्थागमश्चेति, रुजाहेतुरय गण ॥ १४९ ॥ वातपित्तकफानां च, यदत्सक्षोभकार-
णम् । रजस्तमस्करं चेति, तत्तदस्याः प्रयोजकम् ॥ १५० ॥ किं तु—बाह्यान्यपि निमित्तानि, स एव परमार्थत । असातास्य प्रयुङ्क्ते-
ऽयः, स एव परकारणम् ॥ १५१ ॥ प्रविष्टेव शरीरेषु, योगित्वेन शरीरिणाम् । स्वास्थ्यं निहत्य वीर्येण, करोत्यातुरतां पराम् ॥ १५२ ॥
ज्वरातिसारकुष्ठार्शःप्रमेहप्लीहधूमकाः । अम्लकग्रहणीशूलहिक्काश्वासक्षयभ्रमाः ॥ १५३ ॥ गुल्महृद्रोगसमोहश्वासानाहकम्पकाः । कण्डू-
कोदरशोषकसगन्दरगलामया ॥ १५४ ॥ पामाजलोदरोन्मादशोपवीसर्पछर्दयः । नेत्ररोगशिरोरोगविद्रधिप्रमुखा भटाः ॥ १५५ ॥
सर्वेऽप्यस्याः परीवारः, स्वात्मभूतो महाबलः । यत्प्रभावादिय वत्स!, रुजा जेतु न पार्यते ॥ १५६ ॥ चतुर्भिः कलापकम् । अस्ति

श्रया । ईर्ष्यादयश्च विज्ञेयाः, खलतापरिचारिका ॥ १९५ ॥ युग्मम् । अस्ति पुण्योदयो नाम, द्वितीयो भूमभूपतेः । सेनानीस्तस्ययु-
क्तोऽस्ति, सौजन्याख्यो नरोत्तमः ॥ १९६ ॥ स वीर्यधैर्यगाम्भीर्यप्रश्रयस्थैर्यपेशलैः । परोपकारदाक्षिण्यकृतज्ञत्वार्जवादिभिः ॥ १९७ ॥
युत पदार्थैभिस्तात!, जन बन्धुरमानसम् । कुर्वाणो निजवीर्येण, सत्सुधाक्षोदपेशलम् ॥ १९८ ॥ सद्धर्मलोकमर्यादा, सदाचारं सुमि
त्रताम् । घटयत्यतुलां लोके, सच्चिमन्मसुखासिकाम् ॥ १९९ ॥ जनयत्येव केषाञ्चिद्ध्रुवधमेऽपि देहिनाम् । निर्मिध्य चारुतामुर्वि, गाढ
सौन्दर्ययोगतः ॥ २०० ॥ तस्यैव खलता तात!, नितरां परिपन्थिनी । यत्र सोऽमृतमेषा तु, कालकूटविषाधिका ॥ २०१ ॥ अतो
निहन्तुं स वीर्योऽपि पापिष्ठमानसा । एषा विवर्तते वत्स!, पुरेऽत्र सपरिच्छदा ॥ २०२ ॥ एतया हतसौजन्याश्चेष्टन्ते यादृश जना ।
तदुक्त्याऽलं तथापीषद्गणित्वा तव कथ्यते ॥ २०३ ॥ चर्चितानेकदुर्मायाः, परवञ्चनतत्पराः । निष्पिष्टा द्वेषयन्त्रेण, मुक्तस्नेहा खला
स्फुटा ॥ २०४ ॥ अगृह्यमाणाः सत्कृत्यैर्भषन्त सत्स्वपि । खादन्तो निजवर्गांश्च, ते खला मण्डलाधिकाः ॥ २०५ ॥ उत्पादयन्त
च्छिद्राणि, पातयन्तः स्थिरामपि । कार्ये त्रिपिटिका कुर्युरुद्वेग ते खलाः खलु ॥ २०६ ॥ चित्तेन चिन्तयन्त्यन्यदन्यज्जल्पन्ति भाषया ।
क्रियथाऽन्यत्र चेष्टन्ते, ते खला खलताहताः ॥ २०७ ॥ कश्चिदुष्णाः कश्चिच्छीताः, कश्चिन्मध्यमता गताः । नैकरूपा भवन्त्येते, सान्नि-
पाता इव ज्वराः ॥२०८॥ किं च—तवानुरोधतो वत्स!, कथाप्येषा मया कृता । स्वयं त्वमीषां नामापि, नाहमाख्यातुमुत्सहे ॥ २०९ ॥
यद्वेषा खलता तात!, लेशतो गदिता मया । निबोध साम्प्रतं वत्स!, वर्ण्यमानां कुरूपताम् ॥२१०॥ योऽसौ ते पूर्वमाख्यातो, नामनामा
महीपतिः । स दौष्टेन युनक्त्येनां, भवचक्रे कुरूपताम् ॥२११॥ बाहुविध्य वपत्युश्चैर्बहिरङ्गानि भावत । तस्यैवादेशकारीणि, यान्यस्याः
कारणानि भो! ॥ २१२ ॥ तथाहि—दुष्टाहारविहाराद्यैः, प्रकुप्यन्त कफादयः । भूयांसो देहिनां देहे, जनयन्ति कुरूपताम् ॥२१३॥

एष सर्वैश्वर्योवियमुदामचारिणी । किञ्चिन्नापेक्षते वत्स!, विचरन्ती यथेच्छया ॥ १७६ ॥ ईश्वरेषु दरिद्रेषु, वृद्धेषु तरुणेषु च । दुर्बलेषु बलिष्ठेषु, धीरेषु करुणेषु च ॥ १७७ ॥ आपद्गतेषु हृष्टेषु, वैरभाजिषु बन्धुषु । तापसेषु गृहस्थेषु, समेषु विषमेषु च ॥ १७८ ॥ किं चात्र बहुनोक्तेन?, सर्वावस्थागतेष्वियम् । प्रभवत्येव लोकेषु, भवचक्रनिवासिषु ॥ १७९ ॥ अस्त्यस्याः मूला सद्भार्या, जीविका नाम वि-श्रुता । तस्यायुर्नामनृपतेर्लोकाह्लादनतत्परा ॥ १८० ॥ तद्बलादवतिष्ठन्ते, निजस्थानेष्वमी जना । अतो हितकरत्वेन, सा सर्वजनवल्लभा ॥ १८१ ॥ अतस्तां जीविकां हत्वा, मृतिरेषा सुदारुणा । लोकं स्वस्थानतोऽन्यत्र, प्रेषयत्येव लीलया ॥ १८२ ॥ प्रहिताश्च तथा यान्ति, दृश्यन्ते न यथा पुनः । नीयन्ते च तथा केचिद्यथाऽसौ रिपुकम्पनः ॥ १८३ ॥ प्रजन्तश्च धन गेहं, बन्धुवर्गं परिच्छदम् । सर्वं वि-मुच्य गच्छन्ति, मृत्यादेशेन ते जनाः ॥ १८४ ॥ एकाकिन कृतोद्योगा, सुकृतेतरशम्बला । दीर्घं मार्गं प्रपद्यन्ते, सुखदुःखसमाकुलम् ॥ १८५ ॥ तभिजास्तु तथा कृत्वा, रोदनाक्रन्दगुन्दलम् । लगन्ति स्वीयकृत्येषु, खादन्ति च पिबन्ति च ॥ १८६ ॥ विभजन्ते धन भोगैर्युज्यन्ते च तदर्थिनः । सारमेया इवासाद्य, किञ्चिदामिषखण्डकम् ॥ १८७ ॥ तदर्थं तु कृताघोषास्ते जना दुःखकोटिभि । के-वलाः परिपीड्यन्ते, मृत्याविष्टा बहिर्गताः ॥ १८८ ॥ एवं च स्थिते—निवेदिता मृतिर्वत्स!, नानाकारेषु धामसु । सचार्यते यथा लोको, भवचक्रे मुहुर्मुहुः ॥ १८९ ॥ अधुना वर्ण्यमानेयं, खलताऽप्यवधार्यताम् । एतत्स्वरूपविज्ञाने, यद्यस्ति तव कौतुकम् ॥ १९० ॥ अस्ति पापोदयो नाम, सेनानीर्मूलभूपतेः । प्रयुक्ता तात! सेनैषा, खलता भवचक्रके ॥ १९१ ॥ बहिर्निमित्तमप्यस्याः, किल दुर्जनसङ्गमः । केवलं तत्त्वतः सोऽपि, पापोदयनिमित्तकः ॥ १९२ ॥ वीर्यमस्या शरीरेषु, वर्तमानेयमुच्चकैः । कुरुते देहिनां दुष्टं, मनः पापपरायणम् ॥ १९३ ॥ शाठ्यपैशुन्यदौःशील्यवैभाष्यगुरुविप्लवा । मित्रद्रोहकृतघ्नत्वनैर्लज्ज्यमदमत्सराः ॥ १९४ ॥ मर्मोद्घट्टनवैयात्ये, परपीडननि-

शक्यत एवावश्यभाविनीनामासां निराकरणं कर्तुं, विमृश्यकारी च पुरुषः कथमशक्येऽर्थे प्रवर्तते ?, न हि कर्मपरिणामकालपरिणतिस्वभावलोकस्थितिभवितव्यतादिसंपूर्णकारणसामग्रीबलप्रवर्तितानामवश्यमाविर्भवन्तीनाममूषामन्येषां वा कार्यविशेषाणां निराकरणे यतमानः पुरुषः प्रयासादृते कञ्चिदर्थं पुष्णाति, प्रकर्षः प्राह—माम ! पूर्वं भवता प्रत्येकमासां जरारुजादीनामपराण्येवान्तरङ्गबहिरङ्गाणि प्रवर्तकानि निर्दिष्टानि तत्कथमिदानीं कर्मपरिणामादीनि प्रवर्तकत्वेनोच्यन्ते ?, विमर्शेनोक्तं—तानि विशेषकारणानीतिकृत्वा प्राधान्येनोक्तानि, परमार्थतस्तु यथानिर्दिष्टकर्मपरिणामादिकारणकलापव्यापारमन्तरेण न नयननिमेषोन्मेषमात्रमपि कार्यजातं किञ्चिज्जगति जायते, प्रकर्षः प्राह—माम ! यद्येवं ततः पुरुषेण किमात्मनो निजवर्गीणस्य वाऽमूरभ्यर्णवर्तिनीरापतन्तीरुपलक्ष्य न कर्तव्य एव कश्चिदासां निवारणोपायः ? किं नान्वेषणीया एव भेषजौषधमन्त्रतन्त्ररसायनचतुर्विधदानीत्यादयः समुपस्थितजरारुजामृत्यादिनिर्घातनोपायाः ? किं सर्वथा पादप्रसारिकैवात्र श्रेयस्करी ? किमकिञ्चित्कर एव पुरुषो हेयोपादेयहानोपादाने ?, ननु प्रत्यक्षविरुद्धमिदं, यतः प्रवर्तन्त एव पुरुषा हिताहितयोरवाप्तिनिराकरणकामतया, प्रवृत्ताश्चोपायेन प्राप्नुवन्ति हितमर्थं, निराकुर्वन्ति चोपस्थितमप्युपायत एवाहितमिति, विमर्शेनोक्तं—वत्स ! विश्रब्धो भव मोत्सुकतां यासीः परामृश वचनैदम्पर्यं, निश्चयतो हि मयोक्तं यथा—मा प्रवर्तिष्ट पुरुषः, व्यवहारतस्तु तत्प्रवृत्तिं को वारयति ?, पुरुषेण हि सर्वत्र पुरुषापराधमलः सदनुष्ठाननिर्मलजलेन क्षालनीयः, तदर्थं हि तत्प्रवृत्तिः, यतो नाकलयत्यसौ तदा भाविकार्यपरिणामं, ततो व्यवहारतः सर्वहेयोपादेयहानोपादानसाधनं समाचरत्येव । किं च—चिन्तितं चानेन—यदुताहं न प्रवर्ते तथाप्यसावप्रवर्तमानो नासितुं लभते, यतः कर्मपरिणामादिकारणसामग्र्या वेतालाविष्ट इव हठात्प्रवर्तत एव, न चाकिञ्चित्करः पुरुषः, किं तर्हि ?, स एव प्रधानं, तदुपकरणत्वात्कर्मपरिणामादीनां, न च पादप्रसारिका श्रेयस्करी, व्यवहारतः पुरुषप्रवृत्तेर्हिताहितनिर्वर्तनाप-

काऽऽकुला । न्यूनता लघुता येषविज्ञानफलहीनता ॥ २५२ ॥ श्लाघायाः परिवारेऽस्या, भवन्ति बहवो जनाः । पुरेऽत्र यद्बलाद्देषा, चम्भ्रमीति चलोत्कुरा ॥ २५३ ॥ अस्ति प्रयुक्ता तेनैव, सुप्रसन्नेन देहिनाम् । नाम्ना सुभगता नाम्ना, प्रख्याता जनमोहिनी ॥ २५४ ॥ सा सौष्ठवमनस्तोषगर्वगौरवसम्भवैः । आयत्यपरिभूताद्यै, परिवारितविग्रहा ॥ २५५ ॥ व्रजन्ती भवचक्रेऽत्र, जनमानन्दनिर्भरम् । करोति सुखितं मान्यं, निःशेषजनवल्लभम् ॥ २५६ ॥ तस्याश्च प्रतिपक्षत्वादिव दुर्भगताऽधमा । उन्मूलनकरी तात !, करिणीव लतातते ॥२५७॥ अतः सोन्मूलिता येषामेनया हितकारिणी । ते प्रकृत्यैव जायन्ते, जनानां गाढमप्रिया ॥ २५८ ॥ स्वमर्त्रेऽपि न रोचन्ते, परेभ्यो नितरां पुनः । बन्धुभ्योऽपि न भासन्ते, जना दुर्भगताहताः ॥ २५९ ॥ गम्यत्वाच्च सपत्नानां, वल्लभानामवल्लभाः । नयन्ति क्लेशत कालमात्मनिन्दापरायणाः ॥ २६० ॥ तदेषाऽपि समासेन, वत्स ! दुर्भगता मया । तुभ्य निगदिता याऽसावुद्दिष्टा सप्तमी पुरा ॥ २६१ ॥ एष च स्थिते—जरा रुजा मृतिश्चेति, खलता च कुरूपता । दरिद्रता दुर्भगता, चरिष्टा क्रमशो यथा ॥ २६२ ॥ एता या यत्प्रयुक्ता या, यद्वीर्या यत्परिच्छदाः । चेष्टन्ते यत्र यामार्थे, निर्दिष्टाः क्रमशस्तथा ॥२६३॥ युग्मम् । एताश्चैव विवल्गन्ते, विपक्षक्षयसूचके । कुर्वाणा भवचक्रेऽत्र, लोकपीडनतत्पराः ॥ २६४ ॥ प्रकर्षेणोदित माम !, किमासां विनिवारका । लोकपाला न विद्यन्ते, नगरेऽत्र नृपादय ? ॥ २६५ ॥ विमर्शेनोदित वत्स !, नैताः शक्या नृपादिभिः । निवारयितुमित्यत्र; कारणं ते निवेदये ॥ २६६ ॥ ये केचिद्वीर्यभूयिष्ठा, प्रभवो भुवनोदरे । तेष्वपि प्रभवन्त्येता, सर्वेषु प्रसभं मुदा ॥ २६७ ॥ सर्वत्र विचरन्तीनामासामुद्दामलीलया । गजानामिव मत्ताना, नास्ति मल्लो जगत्त्रये ॥२६७॥ स्वप्रयोजनवीर्येण, विलसन्तीर्निरङ्कुश । को नाम भुवने साक्षादेताः स्खलयितुं क्षमः ? ॥२६८॥ प्रकर्षेणोक्त—माम ! तत्किं पुरुषेण न यतितव्यमेवामूषां निराकरणे ?, विमर्शेनोक्त—वत्स ! निश्चयतो निराकरणे न यतितव्यमेव, यतो न

शक्यत एवावश्यमाविनीनामासां निराकरणं कर्तुं, विमृश्यकारी च पुरुषः कथमशक्येऽर्थे प्रवर्तते ?, न हि कर्मपरिणामकालपरिणतिस्वभावलोकस्थितिभवितव्यताविसपूर्णकारणसामग्रीबलप्रवर्तितानामवश्यमाविर्भवन्तीनाममूषामन्येषां वा कार्यविशेषाणां निराकरणे यतमान पुरुषः प्रयासादृते कञ्चिदर्थं पुष्णाति, प्रकर्षः प्राह—माम' पूर्वं भवता प्रत्येकमासा जरारुजादीनामपराण्येवान्तरङ्गबहिरङ्गाणि प्रवर्तकानि निर्दिष्टानि तत्कथमिदानीं कर्मपरिणामादीनि प्रवर्तकत्वेनोच्यन्ते ?, विमर्शेनोक्तं—तानि विशेषकारणानीतिकृत्वा प्राधान्येनोक्तानि, परमार्थतस्तु यथानिर्दिष्टकर्मपरिणामादिकारणकलापव्यापारमन्तरेण न नयननिमेषोन्मेषमात्रमपि कार्यजातं किञ्चिज्जगति जायते, प्रकर्ष प्राह—माम' यद्येवं ततः पुरुषेण किमात्मनो निजधर्मिणस्य वाऽभ्यर्णवर्तिनीरापतन्तीरुपलक्ष्य न कर्तव्य एव कश्चिदासां निवारणोपाय ? किं नान्वेषणीया एव वैद्यौषधमन्त्रतन्त्ररसायनचतुर्विधदण्डनीत्यादयः समुपस्थितजरारुजामृत्यादिनिर्घातनोपायाः ? किं सर्वथा पादप्रसारिकैवात्र श्रेयस्करी ? किमकिञ्चित्कर एव पुरुषो हेयोपादेयहानोपादाने ?, ननु प्रत्यक्षविरुद्धमिदं, यत प्रवर्तन्त एव पुरुषा हिताहितयोरवाप्तिनिराकरणकामतया, प्रवृत्ताश्चोपायेन प्राप्नुवन्ति हितमर्थं, निराकुर्वन्ति चोपस्थितमप्युपायत एवाहितमिति, विमर्शेनोक्तं—वत्स' विमुग्धो भव मोत्तालतया यासीः परामृश वचनैदम्पर्यं, निश्चयतो हि मयोक्तं यथा—मा प्रवर्तिष्ट पुरुषः, व्यवहारतस्तु तत्प्रवृत्तिं को वारयति ?, पुरुषेण हि सर्वत्र पुरुषापराधमलः सदनुष्ठाननिर्मलजलेन क्षालनीयः, तदर्थं हि तत्प्रवृत्तिः, यतो नाफलयत्यसौ सदा भाविकार्यपरिणाम, ततो व्यवहारत सर्वहेयोपादेयहानोपादानसाधन समाचरत्येव । किं च—चिन्तितं चानेन—यदुताहं न प्रवर्ते तथाप्यसावप्रवर्तमानो नासितुं लभते, यतः कर्मपरिणामादिकारणसामग्र्या वेतालाविष्ट इव हठात्प्रवर्तत एव, न चाकिञ्चित्करः पुरुषः, किं तर्हि ?, स एव प्रधानः, तदुपकरणत्वात्कर्मपरिणामादीनां, न च पादप्रसारिका श्रेयस्करी, व्यवहारतः पुरुषप्रवृत्तेर्हिताहितनिर्वर्तनाप-

तत्र सर्वत्र तिष्ठन्ते, लोकास्तद्वशवर्तिनः ॥ २८ ॥ तथापि ये विशेषेण, तस्याज्ञाकारिणो जनाः । तेषां स्थानानि ते भद्र!, दर्शयामि परिस्फुटम् ॥ २९ ॥ ततश्चोर्ध्वं विशेषेण, कृत्वाऽसौ दक्षिणं करम् । तर्जन्या दर्शयत्येव, तानि स्थानानि यत्नतः ॥ ३० ॥ अमूनि मानवावासे, दृश्यन्ते यानि सुन्दर! । अभ्यन्तरपुराणीह, पत्तनान्तरमण्डले ॥ ३१ ॥ एतानि वत्स! लोकानां, तेषां स्थानानि लक्षय । मिथ्यादर्शनसङ्गेन, ये वशीकृतचेतसः ॥ ३२ ॥ प्रकर्षेणोक्तं—माम! किन्नामकान्येतानि पुराणि? किमभिधाना वैतेषु लोकाः प्रतिवसन्ति?, विमर्शेनोक्तं—वत्स! समाकर्णय—एकमत्र पुरे तावन्नैयायिकमितीरितम् । नैयायिकाश्च गीयन्ते, ते जना येऽत्र संस्थिताः ॥ ३३ ॥ अन्यद्वैशेषिकं नाम, पुरमत्राभिधीयते । वैशेषिकाश्च ते लोका, येऽस्य मध्ये व्यवस्थिताः ॥३४॥ तथाऽपरं जनैः साङ्ख्यं, पुरमत्र प्रकाशितम् । साङ्ख्याश्च ते विनिर्दिष्टा, लोका येऽत्र वसन्ति भोः ॥ ३५ ॥ इहापरं पुनर्बौद्धं, पुरमाख्यायते जनैः । प्रसिद्धा बौद्धसञ्ज्ञाश्च, ते जना येऽस्य मध्यगाः ॥ ३६ ॥ मीमांसकपुरं नाम, तथाऽन्यत्परिकीर्तितम् । मीमांसकाश्च गीयन्ते, ते लोका येऽत्र संस्थिताः ॥३७॥ लोकायतमिति प्रोक्तं, पुरमत्र तथाऽपरम् । बार्हस्पत्याश्च ते लोका, ये वास्तव्याः पुरेऽत्र भोः! ॥ ३८ ॥ तदेतेषु पुरेषूच्चैर्येऽमी लोकाः प्रकीर्तिताः । ते विशेषेण कुर्वन्ति, मिथ्यादर्शनशासनम् ॥ ३९ ॥ यच्च प्रोक्तं मया पूर्वं, समार्यस्य विजृम्भितम् । तस्य सर्वं तदेतेषु, लोकेषु ननु दृश्यते ॥ ४० ॥ प्रकर्षेणोक्तं—यत्र यानि श्रूयन्ते, मण्डले लोकवार्तया । दर्शनानि किमेतानि, तान्याख्यातानि मे त्वया? ॥ ४१ ॥ विमर्शेनोदितं वत्स!, कथ्यते ते परिस्फुटम् । एतानि पञ्च तान्येव, मीमांसकपुरं विना ॥ ४२ ॥ अर्वाक्कालिकमेतद्धि, मीमांसकपुरं मतम् । तेन दर्शनसङ्ख्यायामेतल्लोकैर्न गण्यते ॥ ४३ ॥ तथाहि—जैमिनिर्वेदरक्षार्थं, दूषणोद्धारणेच्छया । चकार किल मीमांसां, दृष्ट्वा तीर्थिकविप्लवम् ॥ ४४ ॥ तस्मादेतानि पञ्चैव, मीमांसकपुरं विना । लोकैर्दर्शनसङ्ख्यायां, गण्यन्ते नात्र संशयः

॥ ४५ ॥ प्रकर्षः प्राह यद्येवं, ततो भूद्धि क वर्तते । तत्पुरं माम! यल्लोकैर्गीयते पक्षदर्शनम्? ॥ ४६ ॥ विमर्शेनाभिहितं—यदिदं
दृश्यतेऽत्रैव, विवेकवरपर्वते । निर्मलं शिखरं तुङ्गमप्रमत्तत्वनामकम् ॥ ४७ ॥ विस्तीर्णमिदमत्यर्थमत्रैव च निवेशितम् । पुरं लोकोत्तरं
वत्स!, तज्जैनमभिधीयते ॥ ४८ ॥ तस्य ते कथयिष्यामि, ये गुणाः शेषजित्वराः । तथापि लोकरूढ्यैव, पक्षं हि तदुदाहृतम् ॥ ४९ ॥
अन्यच्च तत्र ये लोकास्तेषामेष महत्तमः । न बाधकः प्रकृत्यैव, मिथ्यादर्शननामकः ॥ ५० ॥ प्रकर्षेणोक्तं—अथ स्थितेषु बाध्यन्ते, पुरेषु
यदमी जनाः । शिखरस्थे न बाध्यन्ते, माम! किं तत्र कारणम्? ॥ ५१ ॥ विमर्शेनोक्तं—अस्त्यत्र निर्वृतिर्लोके, नगरी सुमनोहरा । सा च
मुक्तेरतिक्रान्ता, महामोहादिभूभुजाम् ॥ ५२ ॥ निर्द्वन्द्वानन्दसंपूर्णा, सतत निरुपद्रवा । पमिश्राकर्णिता सर्वैः, सा लोके पुरवासिभिः
॥ ५३ ॥ ततो लोकायतं मुक्त्वा, ये शेषपुरवासिनः । नगरीं गन्तुमिच्छन्ति, तामेते वत्स! निर्वृतिम् ॥ ५४ ॥ एते च सर्वे तां गन्तुम
न्तराभैर्महापथैः । स्वकल्पितैः प्रवाञ्छन्ति, परस्परविरोधिभिः ॥ ५५ ॥ ततश्च—अमीभिर्वत्स! भूरिभेदैर्मार्गाः परिकल्पिताः । निर्वृतेः
प्रापकास्ते हि, न घटन्ते सुयुक्तितः ॥ ५६ ॥ विवेकपर्वतोत्तुङ्गशिखरस्थितसत्पुरे । वसद्भिर्यैः पुनर्दृष्टः, सन्मार्गोऽतिमनोहरः ॥ ५७ ॥
स निर्वृतिं नयत्येव, लोकं नास्त्यत्र संशयः । पक्षपातविमुक्तेन, मया तेनेदमुच्यते ॥ ५८ ॥—यथाऽमी बाधिता लोका, येऽघ स्वपुरव
र्तिनः । मिथ्यादर्शनसैन्येन, न गिरिस्थे महापुरे ॥ ५९ ॥ यतः—तन्मिथ्यादर्शनस्यैव, माहात्म्यं स्फुटमुच्यते । यदेते न विजानन्ति,
सन्मार्गं निर्वृतेर्जनाः ॥ ६० ॥ दिङ्मूढा इव मन्यन्ते, कुमार्गमपि तत्त्वतः । सन्मार्ग इति यच्चैते, तत्तस्यैव विजृम्भितम् ॥ ६१ ॥ ये
त्वेते शिखरे लोका, वर्तन्ते वत्स! सत्पुरे । एषामेतद् द्वयं नास्ति, तेनेमे तस्य दूरगाः ॥ ६२ ॥ एतानि च पुराण्यत्र, प्रत्यासन्नानि तेन
ते । दर्शितानि मया वत्स!, नेयत्ता परिकीर्तिता ॥ ६३ ॥ किं तर्हि?—उपलक्षणमेतानि, विज्ञातव्यानि भावत । मिथ्यादर्शनवश्याना-

तत्र सर्वत्र तिष्ठन्ते, लोकास्तद्वशवर्तिनः ॥ २८ ॥ तथापि ये विशेषेण, तस्याज्ञाकारिणो जनाः । तेषां स्थानानि ते भद्र!, दर्शयामि परिस्फुटम् ॥ २९ ॥ ततश्चोर्ध्वं विशेषेण, कृत्वाऽसौ दक्षिणं करम् । तर्जन्या दर्शयत्येष, तानि स्थानानि यत्नतः ॥ ३० ॥ अमूनि मानवावासे, दृश्यन्ते यानि सुन्दर! । अभ्यन्तरपुराणीह, पश्चान्तरमण्डले ॥ ३१ ॥ एतानि वत्स! लोकानां, तेषां स्थानानि लक्षय । मिथ्यादर्शनसख्येन, ये वशीकृतचेतसः ॥ ३२ ॥ प्रकर्षेणोक्तं—माम! किंनामकान्येतानि पुराणि? किमभिधाना वैतेषु लोकाः प्रतिवसन्ति?, विमर्शेनोक्तं—वत्स! समाकर्णय—एकमत्र पुरे तावन्नैयायिकमितीरितम् । नैयायिकाश्च गीयन्ते, ते जना येऽत्र संस्थिताः ॥ ३३ ॥ अन्यद्वैशेषिकं नाम, पुरमत्राभिधीयते । वैशेषिकाश्च ते लोका, येऽस्य मध्ये व्यवस्थिताः ॥३४॥ तथाऽपरं जनैः सांख्यं, पुरमत्र प्रकाशितम् । सांख्याश्च ते विनिर्दिष्टा, लोका येऽत्र वसन्ति भोः ॥ ३५ ॥ इहापरं पुनर्बौद्धं, पुरमाख्यायते जनैः । प्रसिद्धा बौद्धसंज्ञाश्च, ते जना येऽस्य मध्यगाः ॥ ३६ ॥ मीमांसकपुरं नाम, तथाऽन्यत्परिकीर्तितम् । मीमांसकाश्च गीयन्ते, ते लोका येऽत्र संस्थिताः ॥३७॥ लोकायतमिति प्रोक्तं, पुरमत्र तथाऽपरम् । बार्हस्पत्याश्च ते लोका, ये वास्तव्याः पुरेऽत्र भोः! ॥ ३८ ॥ तदेतेषु पुरेषूच्चैरमी लोकाः प्रकीर्तिताः । ते विशेषेण कुर्वन्ति, मिथ्यादर्शनशासनम् ॥ ३९ ॥ यच्च प्रोक्तं मया पूर्वं, सभार्यस्य विजृम्भितम् । तस्य सर्वं तदेतेषु, लोकेषु ननु दृश्यते ॥ ४० ॥ प्रकर्षेणोक्तं—षडत्र यानि श्रूयन्ते, मण्डले लोकवार्तया । दर्शनानि किमेतानि, तान्याख्यातानि मे त्वया? ॥ ४१ ॥ विमर्शेनोक्तं वत्स!, कथ्यते ते परिस्फुटम् । एतानि पञ्च तान्येव, मीमांसकपुरं विना ॥ ४२ ॥ अर्वाक्कालिकमेतद्धि, मीमांसकपुरं मतम् । तेन दर्शनसंख्यायामेतल्लोकैर्न गण्यते ॥ ४३ ॥ तथाहि—जैमिनिर्वेदरक्षार्थं, दूषणोद्धारणेच्छया । चकार किल मीमांसां, दृष्ट्वा तीर्थिकविप्लवम् ॥ ४४ ॥ तस्मादेतानि पञ्चैव, मीमांसकपुरं विना । लोकैर्दर्शनसंख्यायां, गण्यन्ते नात्र संशयः

॥ ४५ ॥ प्रकर्षः प्राह यद्येवं, ततो ब्रूहि क पर्वते । तत्पुरं माम ! यल्लोकैर्गीयते षष्ठदर्शनम् ? ॥ ४६ ॥ विमर्शेनाभिहितं—यदिदं दृश्यतेऽत्रैव, विवेकवरपर्वते। निर्मलं शिखरं तुङ्गमप्रमत्तत्वनामकम् ॥ ४७ ॥ विस्तीर्णमिदमत्यर्थमत्रैव च निवेशितम् । पुरं लोकोत्तरं वत्स !, तज्जैनमभिधीयते ॥ ४८ ॥ तस्य ते कथयिष्यामि, ये गुणाः शेषजित्वराः । तथापि लोकरूढ्यैव, षष्ठं हि तदुदाहृतम् ॥ ४९ ॥ अन्यच्च तत्र ये लोकास्तेषामेष महत्तमः । न बाधकः प्रकृत्यैव, मिथ्यादर्शननामकः ॥ ५० ॥ प्रकर्षेणोक्तं—अधःस्थितेषु बाध्यन्ते, पुरेषु यदमी जनाः। शिखरस्थे न बाध्यन्ते, माम ! किं तत्र कारणम् ? ॥ ५१ ॥ विमर्शेनोक्तं—अस्त्यत्र निर्वृतिर्लोके, नगरी सुमनोहरा। सा च मुक्तेरतिक्रान्ता, महामोहादिभूभुजाम् ॥ ५२ ॥ निर्द्वन्द्वानन्दसंपूर्णा, सततं निरुपद्रवा । एभिश्चाकर्णिता सर्वैः, सा लोके पुरवासिभिः ॥ ५३ ॥ ततो लोकायतं मुक्त्वा, ये शेषपुरवासिनः। नगरीं गन्तुमिच्छन्ति, तामेते वत्स ! निर्वृतिम् ॥ ५४ ॥ एते च सर्वे तां गन्तुमन्तरङ्गैर्महापथैः । स्वकल्पितैः प्रयाञ्छन्ति, परस्परविरोधिभिः ॥ ५५ ॥ तत्तत्र—अमीभिर्वत्स ! भूरिभेदैर्ये मार्गाः परिकल्पिताः । निर्वृतेः प्रापकास्ते हि, न घटन्ते सुयुक्तितः ॥ ५६ ॥ विवेकपर्वतोत्तुङ्गशिखरस्थितसत्पुरे । वसद्भिर्यः पुनर्दृष्टः, सन्मार्गोऽतिमनोहरः ॥ ५७ ॥ स निर्वृतिं नयत्येव, लोकं नास्त्यत्र संशयः । पक्षपातविमुक्तेन, मया तेनेदमुच्यते ॥ ५८ ॥—यथाऽमी बाधिता लोका, येऽधःस्थपुरवर्तिनः । मिथ्यादर्शनसंज्ञेन, न गिरिस्थे महापुरे ॥ ५९ ॥ यतः—तन्मिथ्यादर्शनस्यैव, माहात्म्यं स्फुटमुच्यते । यदेते न विजानन्ति, सन्मार्गं निर्वृतेर्जना ॥ ६० ॥ विमूढा इव मन्यन्ते, कुमार्गमपि तत्त्वतः । सन्मार्ग इति यच्चैते, तत्तस्यैव विजृम्भितम् ॥ ६१ ॥ ये त्वेते शिखरे लोका, वर्तन्ते वत्स ! सत्पुरे । एषामेतद् द्वयं नास्ति, तेनेमे तस्य दूरगाः ॥ ६२ ॥ एतानि च पुराण्यत्र, प्रत्यासन्नानि तेन ते । दर्शितानि मया वत्स !, नेयथा परिकीर्तिता ॥ ६३ ॥ किं तर्हि ?—उपलक्षणमेतानि, विज्ञातव्यानि भावतः । मिथ्यादर्शनवश्याना-

मन्येषामपि सादृश्यम् ॥ ६४ ॥ यतः—यान्येतानि पुराण्यत्र, दृश्यन्ते वत्स भूतले । नान्यत्र देशकालेषु, स्थानकानि बहूनि च ॥ ६५ ॥ यत्तु शिखरस्यापि, तत्पुरं मम सर्वदा । अभ्युपगतमनुत्पन्नं, शाश्वतं परमार्थतः ॥ ६६ ॥ प्रकर्षेणोदितं माम, येऽमीभि परिकल्पिताः । समुत्का निर्वृतेर्मार्गा, लोकैः पुरनिवासिभिः ॥ ६७ ॥ तानहं श्रोतुमिच्छामि, प्रत्येकं सकुतूहल । ततो मेऽनुग्रहं कृत्वा, भवानाख्यातुमर्हति ॥ ६८ ॥ विमर्शः प्राह यद्येवं, तत कृत्वा समाहितम् । चेतस्त्वं वत्स शृणुष्व, मार्गान्वक्ष्ये परिस्फुटम् ॥ ६९ ॥—तत्र नैयायिकैस्तावदेष कल्पितो वत्स निर्वृतिमार्गः, यदुत—प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवाद-जल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वपरिज्ञानान्निःश्रेयसाधिगमः । तत्रार्थोपलब्धिहेतुः प्रमाणं, तच्चतुर्धा, तद्यथा—प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । तत्र प्रत्यक्षम्—इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षं, तत्पूर्वकं त्रिविधमनुमानं, तद्यथा—पूर्ववच्छेषवत्सामान्यतोदृष्टं च, तत्र पूर्ववत्कारणात्कार्यानुमानं, यथा मेघोन्नतेर्भविष्यति वृष्टिरिति, शेषव-त्कार्यात्कारणानुमानं, यथा विशिष्टनदीपूरदर्शनादुपरि वृष्टो देव इति, सामान्यतोदृष्टं नाम यथा देवदत्तादौ गतिपूर्विकां देशान्तरप्राप्ति मुपलभ्य दिनकरेऽपि सा गतिपूर्विकैव समधिगम्यते, प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानं, यथा गौस्तथा गवय इति, आप्तोपदेशः शब्द मागम इत्यर्थः । तदेवमिदं चतुर्विधं प्रमाणमभिहितं । तथाऽऽत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयं । किं स्विदित्यनवधारणात्मकः प्रत्ययः संशयः, किमयं स्थाणुः स्याद्वुत पुरुष इति । येन प्रयुक्तः प्रवर्तते तत्प्रयोजनं । अविप्रतिपत्तिविषयापन्नो दृष्टान्तः । सिद्धान्तश्चतुर्विधः, तद्यथा—सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तः अधिकरणसिद्धान्तः अभ्युपगमसिद्धान्तश्चेति । प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः । संशयादूर्ध्वं भवितव्यताप्रत्ययस्तर्कः, यथा भवितव्यमत्र स्थाणुना पुरुषेण वेति । संशयतर्काभ्यामूर्ध्वं

निश्चयतः प्रत्ययो निर्णयः, यथा पुरुष एवायं स्थाणुरेव वा । तिस्रः कथाः—वादजल्पवितण्डाः, तत्र शिष्याचार्ययोः पक्षप्रतिपक्षपरिग्रहेणाभ्यासख्यापनाय वादकथा, विजिगीषुणा सार्धं छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः, स एव स्वपक्षप्रतिपक्षस्थापनाहीनो वितण्डा। अनैकान्तिकादयो हेत्वाभासाः । नवकम्बलो देवदत्त इत्यादि छलं । दूषणाभासास्तु जातयः । निग्रहस्थानानि पराजयवस्तूनि, तद्यथा-प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासः हेत्वन्तरं अर्थान्तरं निरर्थकं अविज्ञातार्थमपार्थकं अप्राप्तकालं न्यूनमधिकं पुनरुक्तं अननुभाषणं अज्ञानं अप्रतिभा कथाविक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगः अपसिद्धान्तो हेत्वाभासाश्चेति निग्रहस्थानानि । तदेते प्रमाणादयः षोडश पदार्था नैयायिकदर्शनसमासः ॥ वैशेषिकैः पुनरयं वत्स! परिकल्पितो निर्वृतिनगरीगमनमार्गः, यदुत—द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां तत्त्वपरिज्ञानान्निःश्रेयसाधिगमः । स हि निर्वृतिर्निःश्रेयसरूपा । तत्र पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मनो इति नव द्रव्याणि । रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारगुरुत्वद्रवत्वस्नेहवेगशब्दाः पञ्चविंशतिर्गुणाः । उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति पञ्च कर्माणि । सामान्यं द्विविधं—परमपरं च, तत्र परं सत्तालक्षणं, अपरं द्रव्यत्वादीति । नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । अयुतसिद्धानामाधाराधेयभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः । लैङ्गिकप्रत्यक्षे द्वे एव प्रमाणे । इति वैशेषिकदर्शनसमासार्थः । सांख्यैस्तु वत्स! निजबुद्ध्या परिकल्पितोऽयं निर्वृतिनगर्याः पन्थाः, यदुत—पञ्चविंशतितत्त्वपरिज्ञानान्निःश्रेयसाधिगमः । तत्र त्रयो गुणाः—सत्त्वं रजस्तमश्च । तत्र प्रसादलाघवप्रणयानभिष्वङ्गाद्वेषप्रतीतयः कार्यं सत्त्वस्य, शोकतापभेदस्तम्भोद्वेगापद्वेषाः कार्यं रजसः, मरणसादनबीभत्सदैन्यगौरवाणि तमसः कार्यं । ततः सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, सैव प्रधानमित्युच्यते । प्रकृतेश्च महानाविर्भवति, बुद्धि-

रित्यर्थः । बुद्धेश्चाहङ्कारः । तस्मोऽहङ्कारादेकादशेन्द्रियाणि, तद्यथा—पञ्च बुद्धीन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणि पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थलक्षणानि मनश्चाविर्भवन्ति । तथा तत एवाहङ्कारात्तमोबहुलात्पञ्च तन्मात्राणि स्पर्शरसरूपगन्धशब्दलक्षणान्याविर्भवन्ति । तेभ्यश्च पृथिव्यादीनि पञ्च महाभूतानि । तदेषा चतुर्विंशतितत्त्वात्मिका प्रकृतिः । तथा परः पुरुषश्चैतन्यस्वरूपः, स चानेको जन्ममरणकरणानां नियमदर्शनाद्धर्मादिषु प्रवृत्तिनानात्वाच्च । प्रकृतिपुरुषयोश्चोपभोगार्थं संयोगः पङ्ग्वन्धयोरिव, उपभोगश्च शब्दाद्युपलम्भो गुणपुरुषान्तरोपभोगश्च । प्रत्यक्षानुमानागमाः प्रमाणानि । इति सांख्यदर्शनसंक्षेपार्थः ॥ बौद्धैः पुनर्भद्र! परिकल्पितेयं निर्वृतिनगरीवर्तनी, यदुत—द्वादशायतनानि, तद्यथा—पञ्चेन्द्रियाणि पञ्च शब्दादयो मनो धर्मायतनं च, धर्मास्तु सुखादयो विज्ञेयाः । प्रत्यक्षानुमाने द्वे एव प्रमाणे । इति बौद्धदर्शनसमासार्थः ॥ अथवा वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदाच्चतुर्विधा बौद्धा भवन्ति, तत्र वैभाषिकमतमिदं, यदुत—क्षणिकं वस्तु, तद्यथा—जातिर्जनयति स्थितिः स्थापयति जरा जर्जरयति विनाशो नाशयति । तथाऽऽत्माऽपि तथाविध एव पुद्गलश्चासावभिधीयते ॥ सौत्रान्तिकमतं पुनरिदं—रूपवेदनाविज्ञानसंज्ञासंस्काराः सर्वशरीरिणामेते पञ्च स्कन्धा विद्यन्ते, न पुनरात्मा । त एव हि परलोकगामिनः । तथा क्षणिकाः सर्वे संस्काराः स्वलक्षणं परमार्थतः । अन्यापोहः शब्दार्थः । सन्तानोच्छेदो मोक्ष इति ॥ योगाचारमतं त्विदं—विज्ञानमात्रमिदं भुवनं, न विद्यते बाह्योऽर्थः । वासनापरिपाकतो नीलपीतादिप्रतिभासः । आलयविज्ञानं सर्ववासनाधारभूतं । आलयविज्ञानविशुद्धिरेव चापवर्ग इति ॥ माध्यमिकदर्शने तु—सर्वशून्यमिदं, स्वप्नोपमः प्रमाणप्रमेयप्रविभागः । 'मुक्तिस्तु शून्यतादृष्टिस्तदर्थं शेषभावना' इति बौद्धविशेषाणां मतसंक्षेपार्थः ॥ लोकायतैः पुनर्वत्स! सा निर्वृतिनगरी नास्तीति प्रख्यापितं लोके, यतोऽमी ब्रुवते—नास्ति निर्वृतिर्नास्ति जीवो नास्ति परलोको नास्ति पुण्यं नास्ति पापमित्यादि ।

किं तर्हि ?, पृथिव्यापस्तेजो वायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसंज्ञा । तेभ्यश्चैतन्यं मद्याङ्गेभ्यो मदशक्तिवत् । जलबुद्बुद-वज्जीवाः । प्रवृत्तिनिवृत्तिसाध्या प्रीतिः पुरुषार्थः, स च काम एव, नान्यो मोक्षादिः । तस्मात्पृथिव्यादिभ्यस्तत्त्वमस्ति, दृष्टहान्यदृष्टकल्पनासम्भवादिति । प्रत्यक्षमेव चैकं प्रमाणमिति **लोकायतमतसमासः** ॥ मीमांसकानां पुनरेष मार्गः, यदुत—वेदपाठानन्तरं धर्मजिज्ञासा कर्तव्या । यतस्तस्य निमित्तपरीक्षा । निमित्तं च चोदना । यत उक्तं—"चोदनालक्षणोऽर्थो धर्मः" । चोदना च क्रियायां प्रवर्तकं वचनमाहुर्यथा—'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादि । तेन धर्मो लक्ष्यते, नान्येन प्रमाणेन, प्रत्यक्षादीनां विद्यमानोपलम्भनत्वादिति । प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यभावाः षट् प्रमाणानि । इति **मीमांसकमतसमासः** ॥ अमीभिः पुनर्वत्स ! विवेकमहापर्वतारूढैरप्रमत्तत्वशिखरस्थितैर्जैनपुरनिवासिभिर्जैनलोकैरयं दृष्टो निर्वृतिनगरीगमनमार्गः, यदुत—जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वं । तत्र सुखदुःखज्ञानादिपरिणामलक्षणो जीवः । तद्विपरीतस्त्वजीवः । मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः स आस्रवः । आस्रवकार्यं बन्धः । आस्रवविपरीतः संवरः । संवरफलं निर्जरा । निर्जराफलं मोक्ष इत्येते सप्त पदार्थाः । तथा विधिप्रतिषेधानुष्ठानपदार्थाविरोधश्च । अत्र जैनदर्शने स्वर्गकेवलार्थिना तपोध्यानादि कर्तव्यं 'सर्वे जीवा न हन्तव्या' इति वचनात् 'समसमितिगुप्तिशुद्धा क्रिया असपत्नो योग' इति वचनात् । उत्पादविगमध्रौव्ययुक्तं सत् । एकं द्रव्यमनन्तपर्यायमर्थ इति । प्रत्यक्षपरोक्षे द्वे एव प्रमाणे । इति **जैनमतस्य दिग्दर्शनमात्रम्** ॥ तत्रैते प्रथमास्तावच्चत्वारो वत्स ! वादिनः । नैयायिकादयो नैव, निर्वृतेर्मार्गवेदकाः ॥ १ ॥ यतः—एकान्तनित्यमिच्छन्ति, पुरुषं तत्र गामुकम् । सर्वत्रगं च वाञ्छन्ति, तथाऽन्ये क्षणनश्वरम् ॥ २ ॥ नित्यश्चासौ कथं गच्छेत्तस्यामविचलो यतः । सर्वत्रगश्च यो भद्र !, स क्व गच्छेत्कुतोऽपि वा ? ॥ ३ ॥ नश्वरोऽपि विनष्टत्वान्न तस्यां गन्तुमर्हति । तस्मा-

रित्यर्थः । बुद्धेश्चाहङ्कारः । ततोऽहङ्कारादेकादशेन्द्रियाणि, तद्यथा—पञ्च बुद्धीन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणि पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थलक्षणानि मनश्चाविर्भवति । तथा तत एवाहङ्कारात्तमोबहुलात्पञ्च तन्मात्राणि स्पर्शरसरूपगन्धशब्दलक्षणान्याविर्भवन्ति । तेभ्यश्च पृथिव्यादीनि पञ्च महाभूतानि । तदेषा चतुर्विंशतितत्त्वात्मिका प्रकृतिः । तथा परः पुरुषश्चैतन्यस्वरूपः, स चानेको जन्ममरणकरणानां नियमदर्शनाद्धर्मादिषु प्रवृत्तिनानात्वाच्च । प्रकृतिपुरुषयोश्चोपभोगार्थं संयोगः पङ्ग्वन्धयोरिव, उपभोगश्च शब्दाद्युपलम्भो गुणपुरुषान्तरोपभोगश्च । प्रत्यक्षानुमानागमाः प्रमाणानि । इति सांख्यदर्शनसंक्षेपार्थः ॥ बौद्धैः पुनर्भद्र[1] परिकल्पितेयं निर्वृतिनगरीवर्तनी, यदुत—द्वादशायतनानि, तद्यथा—पञ्चेन्द्रियाणि पञ्च शब्दादयो मनो धर्मायतनं च, धर्मास्तु सुखादयो विज्ञेयाः । प्रत्यक्षानुमाने द्वे एव प्रमाणे । इति बौद्धदर्शनसमासार्थः ॥ अथवा वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदाच्चतुर्विधा बौद्धा भवन्ति, तत्र वैभाषिकमतमिदं, यदुत—क्षणिकं वस्तु, तद्यथा—जातिर्जनयति स्थितिः स्थापयति जरा जर्जरयति विनाशो नाशयति । तथाऽऽत्माऽपि तथाविध एव पुद्गलश्चासावभिधीयते ॥ सौत्रान्तिकमतं पुनरिदं—रूपवेदनाविज्ञानसंज्ञासंस्काराः सर्वशरीरिणामेते पञ्च स्कन्धा विद्यन्ते, न पुनरात्मा । त एव हि परलोकगामिनः । तथा क्षणिकाः सर्वे संस्काराः स्वलक्षणं परमार्थतः । अन्यापोहः शब्दार्थः । सन्तानोच्छेदो मोक्ष इति ॥ योगाचारमतं त्विदं—विज्ञानमात्रमिदं भुवनं, न विद्यते बाह्यार्थः । वासनापरिपाकतो नीलपीतादिप्रतिभासाः । आलयविज्ञानं सर्ववासनाधारभूतं । आलयविज्ञानविशुद्धिरेव चापवर्ग इति ॥ माध्यमिकदर्शने तु—सर्वशून्यमिदं, स्वप्नोपमः प्रमाणप्रमेयप्रविभागः । 'मुक्तिस्तु शून्यतादृष्टिस्तदर्थं शेषभावना' इति बौद्धविशेषाणां मतसंक्षेपार्थः ॥ लोकायते पुनर्वत्स ! सा निर्वृतिनगरी नास्तीति प्रख्यापितं लोके, यतोऽमी ब्रुवते—नास्ति निर्वृतिर्नास्ति जीवो नास्ति परलोको नास्ति पुण्यं नास्ति पापमित्यादि ।

किं तर्हि ?, पृथिव्यापस्तेजो वायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसंज्ञा । तेभ्यश्चैतन्य मदाङ्गेभ्यो मदशक्तिवत् । जलबुद्बुदवज्जीवाः । प्रवृत्तिनिवृत्तिसाध्या प्रीतिः पुरुषार्थः, स च काम एव, नान्यो मोक्षादिः । तस्मान्नान्यत्पृथिव्यादिभ्यस्तत्त्वमस्ति, अदृष्टान्यदृष्टकल्पनासम्भवादिति । प्रत्यक्षमेव चैकं प्रमाणमिति लोकायतमतसमासः ॥ मीमांसकानां पुनरेष मार्गः, यदुत—वेदपाठानन्तरं धर्मजिज्ञासा कर्तव्या । यतश्चैव ततस्तस्य निमित्तपरीक्षा । निमित्तं च चोदना । यत उक्तं—"चोदनालक्षणोऽर्थो धर्मः" । चोदना च क्रियायां प्रवर्तकं वचनमाहुर्यथा—'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादि । तेन धर्मो लक्ष्यते, नान्येन प्रमाणेन, प्रत्यक्षादीनां विद्यमानोपलम्भनत्वादिति । प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यभावाः षट् प्रमाणानि । इति मीमांसकमतसमासः ॥ अमीभिः पुनर्वत्स[1] विवेकमहापर्वतारूढैरप्रमत्तत्वशिखरस्थितैर्जैनपुरनिवासिभिर्जैनलोकैरयं दृष्टो निर्वृतिनगरीगमनमार्गः, यदुत—जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वं । तत्र सुखदुःखज्ञानादिपरिणामलक्षणो, जीवः । तद्विपरीतस्त्वजीवः । मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः स आस्रवः । आस्रवकार्यं बन्धः । आस्रवविपरीतः संवरः । संवरफलं निर्जरा । निर्जराफलं मोक्ष इत्येते सप्त पदार्थाः । तथा विधिप्रतिषेधानुष्ठानपदार्थाविरोधश्च । अत्र जैनदर्शने स्वर्गकेवलार्थिना तपोध्यानादि कर्तव्यं 'सर्वे जीवा न हन्तव्या' इति वचनात् 'समितिगुप्तिशुद्धा क्रिया असपत्नो योग' इति वचनात् । उत्पादविगमध्रौव्ययुक्तं सत् । एकं द्रव्यमनन्तपर्यायमर्थ इति । प्रत्यक्षपरोक्षे द्वे एव प्रमाणे । इति जैनमतस्य दिग्दर्शनमात्रम् ॥ तत्रैते प्रथमास्तावच्चत्वारो वत्स[1] वादिनः । नैयायिकादयो नैव, निर्वृतेर्मार्गवेदकाः ॥ १ ॥ यत —एकान्तनित्यमिच्छन्ति, पुरुषं तत्र गामुकम् । सर्वत्रगं च वाञ्छन्ति, तथाऽन्ये क्षणनश्वरम् ॥ २ ॥ नित्यश्चासौ कथं गच्छेत्तस्यामविचलो यतः । सर्वत्रगश्च यो भद्र[1], स कं गच्छेत्कुतोऽपि वा ? ॥ ३ ॥ नश्वरोऽपि विनष्टत्वान्न तस्यां गन्तुमर्हति । तस्मा-

देवे न जानन्ति, मार्गं तस्यास्तपस्विन ॥४॥ लोकायतास्तु दूरेण, वर्तन्ते वत्स ! निर्वृतेः । ये हि पापहतात्मानो, निराकुर्वन्ति तामपि ॥५॥ किं च—लोकायतमतं प्राज्ञैर्ज्ञेयं पापौघकारणम् । निर्द्वन्द्वानन्दपूर्णाया, निर्वृतेः प्रतिषेधकम् ॥ ६ ॥ तस्माद्दुष्टाशयकरं, क्लिष्टमनस्सविचिन्तितम् । पापभूत सदा धीरैर्वर्ज्यं नास्तिकदर्शनम् ॥ ७ ॥ परमार्थेन सा वत्स !, नेष्टा मीमांसकैरपि । ये सर्वज्ञं निराकृत्य, वेदप्रामाण्यमीरितम् ॥ ८ ॥ तदेवमेते सर्वेऽपि, भूमिष्ठपुरवासिनः । अनेन कारणेनोक्ता, मिथ्यादर्शनमोहिता ॥ ९ ॥ एते तु शिखरारूढाः, पुरे वास्तव्यका जनाः । च वदन्ति स निर्मिथ्यो, निर्वृतेः प्रगुणः पथः ॥ १० ॥ ततश्च—यथावस्थितसन्मार्गवेदिना वीर्यशालिनाम् । महत्समो न बाधायै, मिथ्यादर्शननामकः ॥ ११ ॥ ज्ञानसद्ध्यानपूतास्ते, निःस्पृहा भवचारके । चारित्रयानमारुह्य, निर्वृतिं यान्ति मानवाः ॥ १२ ॥ यथा च सन्मा(त्यो मा)र्गोऽयं, यथा चान्ये न तद्विधाः । इद च पुरतो वत्स !, यथाहं ते विचारये ॥१३॥ ततो जन्म समाप्त्येति, न विचारस्य निष्ठितिः । तेनेव ते समासेन, प्रविभज्य निवेद्यते ॥ १४ ॥ युग्मम् । ज्ञानदर्शनचारित्रलक्षणो ह्यान्तरो मतः । विशुद्धिर्निर्वृतेर्मार्गः, प्रगुणः सुपरिस्फुटः ॥ १५ ॥ स दृष्टः पर्वतास्थैर्न दृष्टो भूमिवासिभिः । तेनैते तत्र गन्तारो, न गन्तारो भुवि स्थिता ॥ १६ ॥ तदेते कथितास्तुभ्यं, भवचक्रे मया जनाः । ये मिथ्यादर्शनाख्येन, तेन भद्र ! विडम्बिताः ॥ १७ ॥ प्रकर्षः प्राह मामेदं, भवचक्र मया पुरम् । सर्वं विलोकितं दृष्टं, वीर्यमान्तरमङ्गुजाम् ॥ १८ ॥ केवल सचित जात, महाहास्यकरं परम् । आभाणक जगत्यत्र, यद्बालैरपि गीयते ॥ १९ ॥ गन्त्रीमनुष्यसामग्र्या, यो वधूमाहरिष्यति । तस्यैव विस्मृता हन्त, सा वधूरिति कौतुकम् ॥ २० ॥ तथाहि—महामोहादिजेतारो, महात्मानो नरोत्तमाः । द्रष्टव्या भवचक्रेऽत्र, सन्तोषसहिताः किल ॥ २१ ॥ एतदर्थमिहायातौ, मामावामत्र पत्तने । न दृष्टास्ते महात्मानो, न च सन्तोषभूपतिः ॥ २२ ॥ अतोऽधुनापि तान्मामो, मदनुग्रहकाम्यया ।

गत्वा ते यत्र वर्तन्ते, तत्स्थानं दर्शयत्वलम् ॥ २३ ॥ विमर्शेनोदितं वत्स!, यदिदं शिखरे स्थितम् । जैनं पुरं भवन्त्येव, नूनमत्र
तथाविधा ॥ २४ ॥ तत्रावत्रैव गच्छावो, येनेदं ते कुतूहलम् । साक्षाद्दर्शनतो वत्स!, नि शेषं परिपूर्यते ॥ २५ ॥ एवं भवतु तेनोक्ते,
द्वौ गतौ तत्र सत्पुरे । दृष्टाश्च साधवस्तत्र, निर्मलीमसमानसाः ॥ २६ ॥ विमर्शः प्राह भद्रैते, ते लोका यैर्महात्मभिः । निक्षिप्ता
निजवीर्येण, महामोहादिभूभुजः ॥ २७ ॥ "सर्वे भगवतामेषां, बान्धवा वत्स! जन्तवः । एते त्रसेतराणां च, बान्धवाः सर्वदेहिनाम्
"॥ २८ ॥ समस्ता मातरोऽमीषां, नरामरपशुस्त्रियः । एतेऽपि सुतवत्तासां, भगवन्तो नरोत्तमाः ॥ २९ ॥ बाह्ये परिग्रहे वत्स!, निजेऽपि
"च शरीरके । चित्तं न लग्नमेतेषां, पद्मवज्जलपङ्कयोः ॥ ३० ॥ सत्यं भूतहितं वाक्यममृतक्षरणोपमम् । एते परीक्ष्य भाषन्ते, कार्ये सति
"मिताक्षरम् ॥ ३१ ॥ असत्क्रयोगसिद्धार्थं, सर्वदोषविवर्जितम् । आहारमेते गृह्णन्ति, लौल्यनिर्मुक्तचेतसः ॥ ३२ ॥ किं चेह बहुनोक्तेन?,
"चेष्टा या या महात्मनाम् । सा सा भगवतामेषा, महामोहादिसूदनी ॥ ३३ ॥ तेन वत्स! भगवतामेतेषां सम्बन्धिन्याऽपेक्षया तस्यां
"चित्तवृत्तिमहाटव्यामेव जानीहि यदुत—अत्यन्तशुष्का सा प्रमत्तता नदी, विरलीभूतं तद्विलसितपुलिनं, परिभग्नश्चित्तविक्षेपमण्डपः,
"निरस्ता तृष्णावेदिका, विघटितं विपर्यासविष्टरं, सचूर्णिता चाविद्यागात्रयष्टिः, प्रलीनो महामोहराजः, उच्चाटितो महामिथ्यादर्शनपि-
"शाचः, निर्नष्टो रागकेसरी, निर्भिन्नो द्वेषगजेन्द्रः, विपाटितो मकरध्वजः, विदारितो विषयाभिलाषः, निर्वासिता महामूढतादयस्तद्भार्याः,
"विहिंसितो हासभटः, विकर्तिता जुगुप्सारती, निपूदितौ भयशोकौ, विदलिता दुष्टाभिसन्धिप्रभृतयश्चरटाः, पलायितानि डिम्भरूपाणि,
"विद्राविता ज्ञानसंवरणादयस्ते त्रयो दुष्टनरपतयः, अनुकूलीभूतास्ते चत्वारः सामन्ता मध्यवर्तिनो वेदनीयादयः, व्यपगतं चतुरङ्गमपि
"तत्सकलं बलं, प्रशान्ता बिब्बोकाः, विगलिता विलासाः, तिरोभूताः समस्तविकाराः । किं बहुना? सर्वथा—यद्दृष्टं भवता तस्यां, त-

"र्णित च मया पुरा । यत्तु किञ्चित्समस्तानां, दुःखद भावदेहिनाम् ॥ १ ॥ चित्तवृत्तिमहाटव्या, तत्सर्वमिह संस्थिता । प्रलीन वत्स !
"पश्यन्ति, नूनमेवं महाधियः ॥२॥ युग्मम् सा सर्वोपद्रवैर्मुक्ता, शेषा रत्नौघपूरिता । एतेषां ध्यानयोगेन, चित्तवृत्तिः प्रभासते ॥३॥ सदेवं
"ते महात्मानो, ये मया वत्स ! वर्णिताः । पूर्वं तपोधनाः सम्यक्, पश्य विस्फारितेक्षण ॥ ४ ॥ प्रकर्षेणोक्तं—चारु चारु कृत माम !,
विहितो मदनुग्रहः । अनितः धूतपापोऽहमेतेषां दर्शनात्त्वया ॥ ५ ॥ कृत मानसनिर्वाणं, विहितः पटुलोचनः । आनन्दाम्बुवसेकेन, गात्र
निर्वापित च मे ॥ ६ ॥ केवल दर्शनीयोऽसौ, ममाद्यापि ननु त्वया । यो वर्णितो महावीर्यो, माम ! सन्तोषभूपतिः ॥ ७ ॥ विमर्शे-
नोक्तं—य एष दृश्यते वत्स !, सद्दृष्टेः सुखदायकः । शुभ्रचित्तसमाधानो, नाम विस्तीर्णमण्डपः ॥ ८ ॥ सर्वेषां वल्लभोऽमीषां, जनानां
पुरवासिनाम् । स सन्तोषमहाभूपो, नूनमत्र भविष्यति ॥ ९ ॥ प्रकर्षः प्राह यद्येवं, ततोऽत्रैव प्रविश्यताम् । एवं भवतु वत्सेति,
वभाषे तस्य मातुलः ॥ १० ॥ प्रविश्य चोचिते देशे, ताभ्यां दृष्टः स मण्डप । निजप्रभावविक्षिप्तजनसन्तापसुन्दरः ॥ ११ ॥ तत्र
च—राजमण्डलमध्यस्थं, दीप्तिनिर्धूततामसम् । वेष्टितं भूरिलोकेन, सच्चिदानन्ददायकम् ॥ १२ ॥ विशालवेदिकारूढमुपविष्टं वरासने ।
दृष्टवन्तौ नरेन्द्रं तौ, पश्यतः स्म चतुर्मुखम् ॥ १३ ॥ ततः प्रकर्षस्तं वीक्ष्य, मनसा हर्षनिर्भरः । मनाक् सजातसन्देहो, मातुलं प्रत्य-
भाषत ॥ १४ ॥ अहो रम्यमिदं जैन, पुरं यत्रेदृशः प्रभुः । ईदृशो मण्डपो लोका, वास्तव्या यत्र चेदृशाः ॥ १५ ॥ एव च स्थिते—
यत्रेदृश पुरं माम !, विवेकवरपर्वते । किं सोऽयं भवचक्रेऽत्र, वर्तते दोषपूरिते ॥ १६ ॥ विमर्शेनोदितं वत्स !, यस्मिन्नेष महागिरिः ।
वर्तते तवद् वक्ष्ये, स्थानमस्य निशामय ॥ १७ ॥ चित्तवृत्तिमहाटव्यां, वर्तते परमार्थतः । भवचक्रे तु विद्वद्भिरुपचारेण कथ्यते ॥ १८॥
यतोऽत्र विद्यते वत्स !, सल्लोकपरिपूरितम् । अन्तरङ्गं सुविस्तीर्णं, पुरं सात्त्विकमानसम् ॥ १९ ॥ तत्राय संस्थितो वत्स !, विवेकवरप-

वेतः । आधाराधेयसम्बन्धस्तेनैव परिकीर्तितः ॥ २० ॥ प्रकर्षेणोदितं—माम ! यथैव ततो यदिदमस्य पर्वतस्याधारभूतं सात्त्विकमानसं पुरं ये च तत्सेविनो बहिरङ्गलोकाः यच्चायं विवेकमहागिरिः यच्चेदमप्रमत्तशिखरं यश्चासौ जैनं पुरं ये चात्र स्थिता बहिरङ्गजनाः यच्चायं चित्तसमाधानमहामण्डपो या चेयं वेदिका यच्चेदं सिंहासनं यश्चायं नरेन्द्रो यश्चायमस्य परिवारः तदिदं सर्वं मम जन्मापूर्वं ततो ममानुग्रहधिया प्रत्येकं विशेषतस्तद्वर्णयितुमर्हसि माम, विमर्शेनोक्तं—वत्स ! यद्येवं तत समाकर्णय—यदिदं पर्वताधारं, पुरं सात्त्विकमानसम् । तदन्तरङ्गरत्नानां, सर्वेषामाकरो मतम् ॥ २१ ॥ अनेकदोषपूर्णेऽपि, भवचक्रे व्यवस्थितम् । नेदं स्वरूपतो वत्स !, दोषसंश्लेषभाजनम् ॥ २२ ॥ अधन्या भवचक्रेऽत्र, वर्तमाना मनुष्यकाः । इदं स्वरूपतो वत्स !, न पश्यन्ति कदाचन ॥ २३ ॥ यानि निर्मलचित्तादिपुराण्यन्तरभूमिषु । अत्रैव प्रतिबद्धानि, तानि जानीहि मातुल ॥ २४ ॥ स कर्मपरिणामाख्यो, राजा नेदं महापुरम् । समुक्तिं ददात्येकं, महामोहादिभूभुजाम् ॥ २५ ॥ किं तर्हि ?, स्वयमेव भुनक्तीदं, तथाऽन्यैर्वरभूमिपैः । शुभाशयादिभिर्वत्स !, भोजयेच्च समुक्तिकम् ॥ २६ ॥ इदं हि जगतः सारमिदं च निरुपद्रवम् । इदमेव कृताह्लादं, बहिर्जनमनोहरम् ॥ २७ ॥ तदिदं ते समासेन, पुरं सात्त्विकमानसम् । निवेदितं मया वत्स !, शृणु चात्राधुना जनम् ॥ २८ ॥ ये लोका निवसन्त्यत्र, पुरे सात्त्विकमानसे । बहिरङ्गा भवन्त्येषां, शौर्यवीर्यादयो गुणाः ॥ २९ ॥ बहिरङ्गा जनास्ते हि, निवसन्त्यत्र सत्पुरे । पुरमाहात्म्यमात्रेण, गच्छन्ति विबुधालये ॥ ३० ॥ अन्यच्च वसतामत्र, पुरे सात्त्विकमानसे । प्रत्यासन्नतया याति, विवेको दृष्टिगोचरे ॥ ३१ ॥ ततश्च—यदारोहन्त्यमु लोका, विवेकवरपर्वतम् । ततो जैनं समासाद्य, पुरं यान्ति सुखास्पदम् ॥ ३२ ॥ एवं च स्थिते—पुरप्रभावमात्रेण, सदैवैते सुन्दरा जनाः । विवेकशिखरारूढाः, पुनः स्युरतिसुन्दराः ॥ ३३ ॥ किं च—अन्येषां पापिनां वत्स !, भवचक्रनिवासिनाम् । सदा न प्रति

"बोद्धमेषु अवष्टभ्नन्ति परीषहेषु सयन्ते विघ्नाद्युपसर्गेषु गूहयति प्रवचनमालिन्य मथ्नयन्तीन्द्रियधूर्त्तगण लुभ्यन्ति तपश्चरणेषु गृध्यन्ति
"वैयावृत्याचरणेषु अभ्युपपद्यन्ते सद्ध्यानयोगेषु तृष्यन्ति परोपकारकरणेषु निघ्नन्ति प्रमादचौरवृन्द बिभ्यति भवचक्रभ्रमणात् जुगुप्सन्ते
"विमार्गचारितां रमन्ते निर्वृतिनगरीगमनमार्गे उपहसन्ति विषयसुखशीलता उद्विजन्ते शैथिल्याचरणात् शोचन्ति चिरन्तनदुश्चरितानि
"गर्हन्ते निजधीकस्खलितानि निन्दन्ति भवचक्रनिवास आराधयन्ति जिनाज्ञायुवर्तिं प्रतिसेवन्ते द्विविधशिक्षाललना ॥" तत्रैव सर्वकार्याणि,
महामोहादिभूभुजाम् । एतेषु नाम[1] हस्यन्ते, जैनेषु सुपरिस्फुटम् ॥ ६९ ॥ तत्कथ भवता प्रोक्तमेव सति ममामत । यथैते दूरतस्त्यक्ता,
महामोहादिशत्रुभि ॥ ७० ॥ विमर्शेनोदित वत्स!, य एते भवतोदिताः । महामोहादयस्तेऽन्ये, वत्सला जैनबान्धवा ॥ ७१ ॥
एवं हि द्विविधा वत्स[1], महामोहादयो मताः । एकेऽरयोऽत्र जन्तूनामपरेऽतुलबान्धवाः ॥ ७२ ॥ यत —प्रथमा भवचक्रेऽत्र, पात-
यन्ति सदा जनम् । अप्रशस्ततया तेषां, प्रकृति खलु तादृशी ॥ ७३ ॥ इतरे निर्वृतिं लोक, नयन्ति निकटे स्थिता । प्रशस्तास्ते यत-
स्तेषां, प्रकृति साऽपि तादृशी ॥ ७४ ॥ तदेते शत्रुभिस्त्यक्ता, बन्धुभिः परिवेष्टिताः । महामोहादिभिर्वत्स[1], मोदन्ते जैनसज्जना
॥७५॥ एव च—अमी सकलकल्याणभाजिनो जैनसज्जनाः । निवेदिता मया तुभ्यमधुना शृणु मण्डपम् ॥ ७६ ॥ अथ चित्तसमाधानो,
मण्डपः सर्वदेहिनाम् । संप्राप्तः कुरुते सौख्यमतुलं निजवीर्यतः ॥ ७७ ॥ अस्यैव भूपतेर्नूनमास्थानार्थं विनिर्मितः । वेधसा त्रिजगद्वन्द्यो-
दारादेष मण्डपः ॥ ७८ ॥ नास्त्येव भवचक्रेऽत्र, सुखगन्धोऽपि सुन्दर!। यावच्चित्तसमाधानो, नैष संप्राप्यते जनैः ॥७९॥
तदेष लेशतो वत्स[1], वर्णितो वरमण्डपः । एषा निःस्पृहता नाम, वेदिका ते निवेद्यते ॥ ८० ॥ ये लोका सेविको वत्स[1], सरन्त्येनां
पुनः पुन । तेषां शब्दादयो भोगाः, प्रतिभान्ति विषोपमाः ॥ ८१ ॥ न तेषु वर्तते चित्त, क्षीयते कर्मसञ्चयः । जायन्ते निर्मलत्वेन,

भवचक्रपराङ्मुखाः ॥ ८२ ॥ येषामेषा स्थिता चित्ते, धन्यानां वत्स! वेदिका । नेन्द्रैर्न देवैर्नो भूपैर्नान्यैस्तेषां प्रयोजनम् ॥ ८३ ॥ एषाऽपि नूनमस्यैव, निविष्टा वरभूपतेः । आस्थानार्थं विधात्रेति, वत्स! सुन्दरवेदिका ॥ ८४ ॥ इयं निःस्पृहता तात!, वर्णिता ते सुवेदिका । जीववीर्यमिदं नाम, साम्प्रतं शृणु विष्टरम् ॥ ८५ ॥ जीववीर्यमिदं येषां, परिस्फुरति मानसे । सुखमेव परं तेषां, दुःखानामुद्भवः कुतः? ॥ ८६ ॥ अयं हि राजा दीप्ताङ्गो, दृश्यते यश्चतुर्मुखः । निविष्टोऽत्र जगद्बन्धुर्दत्तास्थानो मनोरमे ॥ ८७ ॥ यः शुभ्रः परिवारोऽस्य, यद्राज्यं या विभूतयः । यच्चातुलं महत्तेजो, विष्टरं तत्र कारणम् ॥ ८८ ॥ किं चात्र बहुनोक्तेन?, पुरं लोका महागिरिः । शिखरं सत्पुरं लोका, मण्डपो वरवेदिका ॥ ८९ ॥ राजाऽयं सह सैन्येन, राज्यं भुवनसुन्दरम् । जगच्चित्तमिदं सर्वं, माहात्म्येनास्य नन्दति ॥ ९० ॥ तथाहि—यदैतन्न भवत्यत्र, जीववीर्यं वरासनम् । महामोहादिभिः सर्वं, तदिदं परिभूयते ॥ ९१ ॥ विद्यमाने पुनर्वत्स!, जीववीर्यवरासने । महामोहादयो नैव, प्रविशन्त्यत्र मण्डपे ॥ ९२ ॥ अन्यच्च—कश्चित्तिरस्कृतं तात!, महामोहादिभिर्बलम् । इदमाविर्भवत्येव, जीववीर्यप्रभावतः ॥ ९३ ॥ इदं सिंहासनं वत्स!, यावदत्र प्रकाशते । तावद्धि सर्वतोभद्रं, राजा सैन्यं गिरिः पुरम् ॥ ९४ ॥ तदिदं वर्णितं वत्स!, जीववीर्यवरासनम् । परिवारयुतो राजा, साम्प्रतं ते निवेद्यते ॥ ९५ ॥ प्रकर्षेण चिन्तितं—अये! यान्येतानि प्रतिपादितान्यनेन मे वस्तूनि तेषामेष भावार्थो मम स्फुरति हृदये यदुत—अकामनिर्जरापेक्षं, जन्तुवीर्यं यदुत्कटम् । मिथ्यादृष्टेर्विना ज्ञानं, तद्धि सात्त्विकमानसम् ॥ ९६ ॥ ये तेन संयुता लोका, वास्तव्यास्ते प्रकीर्तिताः । त एव तत्प्रभावेण, प्रयान्ति विबुधालये ॥ ९७ ॥ धनपुत्रकलत्रादेः, शरीरात्कर्मणस्तथा । अन्योऽहं भेदतो बुद्धा, महामोहादिशत्रवः ॥ ९८ ॥ अज्ञातजैनसिद्धान्ते, कर्मनिर्जरणात्मने । या स्यादेवंविधा बुद्धिः, स विवेक इहोच्यते ॥ ९९ ॥ युग्मम् । विवेकादप्रमत्तत्वं, कषायादिनिवर्तने । यच्चैतद्गुणोपाधा,

"योहणेषु अवष्टभ्नन्ति परीषहेषु स्मयन्ते दिव्याद्युपसर्गेषु गूहयति प्रवचनमालिन्यं वञ्चयन्तीन्द्रियधूर्तगणं लुभ्यन्ति तपश्चरणेषु गृध्यन्ति
"वैयावृत्यकरणेषु अभ्युपपद्यन्ते सद्ध्यानयोगेषु तृप्यन्ति परोपकारकरणेषु निघ्नन्ति प्रमादचौरवृन्दं बिभ्यति भवचक्रभ्रमणात् जुगुप्सन्ते
"विमार्गचारितां रमन्ते निर्वृतिनगरीगमनमार्गे उपहसन्ति विषयसुखशीलतां उद्विजन्ते शैथिल्याचरणात् शोचन्ति चिरन्तनदुश्चरितानि
"गर्हन्ते निजशीलस्खलितानि निन्दन्ति भवचक्रनिवासं आराधयन्ति जिनाज्ञायुवतिं प्रतिसेवन्ते द्विविधशिक्षाललनां ॥" तदेवं सर्वकार्याणि, महामोहादिशत्रूणाम् । एतेषु नाम[1] दृश्यन्ते, जैनेषु सुपरिस्फुटम् ॥ ६९ ॥ तत्कथं भवता प्रोक्तमेवं सति ममाग्रतः । यथैते दूरतस्त्यक्ता, महामोहादिशत्रुभिः ॥ ७० ॥ विमर्शेनोदितं वत्स[1], य एते भवतोदिताः । महामोहादयस्तेऽन्ये, वत्सला जैनबान्धवाः ॥ ७१ ॥ एते हि द्विविधा वत्स !, महामोहादयो मताः । एकेऽरयोऽत्र जन्तूनामपरेऽतुलबान्धवाः ॥ ७२ ॥ यतः—प्रथमा भवचक्रेऽत्र, पातयन्ति सदा जनम् । अप्रशस्ततया तेषां, प्रकृतिः खलु तादृशी ॥ ७३ ॥ इतरे निर्वृतिं लोकं, नयन्ति निकटे स्थिताः । प्रशस्तास्ते यतस्तेषां, प्रकृतिः साऽपि तादृशी ॥ ७४ ॥ तदेते शत्रुभिस्त्यक्ता, बन्धुभिः परिवेष्टिताः । महामोहादिभिर्वत्स[1], मोदन्ते जैनसज्जनाः ॥७५॥ एवं च—अमी सकलकल्याणभाजिनो जैनसज्जनाः । निवेदिता मया तुभ्यमधुना शृणु मण्डपम् ॥ ७६ ॥ अयं चित्तसमाधानो, मण्डपः सर्वदेहिनाम् । सम्प्राप्तः कुरुते सौख्यमतुलं निजवीर्यतः ॥ ७७ ॥ अस्यैव भूपतेर्नूनमास्थानार्थं विनिर्मितः । वेधसा त्रिजगद्वन्धो यद्दरादेष मण्डपः ॥ ७८॥ नास्त्येव भवचक्रेऽत्र, सुखगन्धोऽपि सुन्दर !। यावच्चित्तसमाधानो, नैष संप्राप्यते जनैः ॥७९॥ तदेष लेशतो वत्स[1], वर्णितो वरमण्डपः । एषा निःस्पृहता नाम, वेदिका ते निवेद्यते ॥ ८० ॥ ये लोका वेदिकां वत्स !, स्मरन्त्येनां पुनः पुनः । तेषां शब्दादयो भोगा, प्रतिभान्ति विषोपमाः ॥ ८१ ॥ न तेषु वर्तते चित्तं, क्षीयते कर्मसञ्चयः । जायन्ते निर्मलत्वेन,

वत्स!, साधूनां शीलमुत्तमम् ॥ ११९ ॥ तेभ्यः सपूर्णमादेश, सुखमेतत्प्रयच्छति ।' किञ्चिन्मात्र प्रकुर्वन्ति, वचोऽस्य' मुनिशेपकाः
॥ १२० ॥ शीलास्य वदनं वत्स!, तपिद वर्णित मया । तृतीय तु तपोनाम, वदन तन्निबोध मे ॥ १२१ ॥ चारित्रधर्मराजस्य, त
क्रमेत मनोहरम् । आकाङ्क्षार्थिविनाशेन, जनेऽत्र कुरुते सुखम् ॥ १२२ ॥ विशिष्टमानसवेगशमसातकरं परम् । तप सततमिद वक्त्रस
न्यायाधमुखावहम् ॥ १२३ ॥ श्वमस्य नरेन्द्रस्य, वदन वीक्ष्य सज्जनाः । आराध्य च महासत्त्वा, निर्वृतिं यान्ति लीलया ॥ १२४ ॥
तदिद ते तपोनाम, भूपतेर्वदनं मया । कथित साम्प्रत वक्ष्ये, चतुर्थ शुद्धभावनम् ॥ १२५ ॥ स्मृत निरीक्षित भक्त्या, सज्जनैरेकम-
नसा । निःशेषपापसघातदलन कुरुते सुखम् ॥ १२६ ॥ अस्यादेशादिमे जैना, भावयन्तीह सज्जना ।—"समस्तवस्तुविस्तारमतितुच्छ
"विनश्वरम् ॥ १२७ ॥ नास्तीह शरण लोके, दुःखपीडितदेहिनाम् । एकश्च जायते जन्तुर्म्रियते च भवोदधौ ॥ १२८ ॥ यदिद देहिनां
"किञ्चिदिहावन्धविधायकम् । शरीरं धनमन्यद्वा, सर्व तद्भिन्नमात्मनः ॥ १२९ ॥ मूत्रासृक्छेदजम्बालपूरित च कलेवरम् । तदत्रात्यन्त-
"बीभत्से, शुचिता धो न विद्यते ॥ १३० ॥ माता भूत्वा पुनर्भार्या, भवत्यत्र भवोदधौ । कर्मास्रवो भवत्येव, पापानुष्ठानकारिणाम्
"॥ १३१ ॥ निवृत्तानां सदाचारात्स्यायते परसवरः । तपसा तु भवत्येव, सतत कर्मनिर्जरा ॥ १३२ ॥ मृता जाताश्च सर्वेषु, लोको
"देशेषु जन्तव । भक्षितानि च सर्वेषु, रूपिद्रव्याणि जन्तुना ॥ १३३ ॥ ससारसागरोत्तारकारकश्च जिनोदितः । धर्मः सुदुर्लभा चात्र,
"बोधिः सर्वज्ञदर्शने ॥ १३४ ॥ अष्टभिः कुलकम् ।" ये चैव भावयन्त्यत्र, महासशुद्धबुद्धयः । आदेश वदनस्यास्य, ते धन्यास्ते मन-
स्विनः ॥ १३५ ॥ चारित्रधर्मराजस्य, वदन चारुदर्शनम् । इद वत्स! प्रकृत्यैव, सर्वसौख्यकर परम् ॥ १३६ ॥ तदेव वदनैर्वत्स!,
चतुर्भिः पुरवासिनाम् । एषां निःशेषसौख्यानि, करोत्येव महानृपः ॥ १३७ ॥ किं च—सर्वेषामेव सुखदो, भुवनोदरचारिणाम् । वत्स!

शिखरे तदुदाहृतम् ॥ १०० ॥ चतुर्वर्णमहासङ्घप्रमोदपरकारणम् । श्रावकाश्च पुनर्जैन, वचन पुरमुच्यते ॥ १०१ ॥ वात्सल्यका जनास्तत्र,
ये तदादेशकारिणः । त एव च चतुर्वर्णा, यथोक्तगुणभूषणाः ॥ १०२ ॥ एष एव च सारोऽत्र, यथार्थो वरमण्डपः । यतः—विना
चित्तसमाधान, पुरमेतन्न शोभते ॥ १०३ ॥ वेदिका चासन चैव, कथित प्रकटाक्षरैः । यथार्थमेव विज्ञेयमिदं द्वितयमञ्जसा ॥ १०४ ॥
ततो येन मया सर्वमिद भावार्थसंयुतम् । मुक्त सोऽह नृप सैन्य, मोक्ष्ये नास्त्यत्र सशयः ॥ १०५ ॥ ततश्च—तोषावष्टम्भतुष्टात्मा, स
प्राह निजमातुलम् । माम! वर्णय राजान, येनाहमवधारये ॥ १०६ ॥ ततस्तन्मातुलेनोक्त, वत्स! योऽय नराधिप । लोके चारित्रध-
र्मोऽय, प्रसिद्धोऽत्यन्तसुन्दरः ॥ १०७ ॥ अनन्तवीर्यो विख्यातः, प्रगुणो जगते हित । समृद्धः कोशदण्डाभ्यां, ज्ञेय सर्वगुणाकरः
॥ १०८ ॥ यान्यस्य वत्स! दृश्यन्ते, चत्वारि वदनानि भोः! । तेषां नामानि ते वक्ष्ये, वीर्याणि च निबोध मे ॥ १०९ ॥—दान
शीलं तपस्तात!, चतुर्थ शुभभावनम् । एतानि ननु वक्त्राणां, नामान्येषां यथाक्रमम् ॥ ११० ॥ तत्राद्य स्थापयत्यत्र, पात्रेभ्यो जैनस-
त्पुरे । सज्ज्ञान मोहनाशार्थमभयं जगतः प्रियम् ॥ १११ ॥ तथा—सद्धर्माधारदेहानां, मदुपष्टम्भकारणम् । आहारवस्त्रपात्रादि, दीयता-
मिति भाषते ॥ ११२ ॥ दीनान्धकृपणेभ्यश्च, दीयमानं कृपापरैः । आहारादिकमेतन्मो!, वदन न निषेधति ॥ ११३ ॥ गवाश्वभूमिहे-
मानि, यच्चान्यदपि तादृशम् । तन्नेच्छति गुणाभावाद्दीयमानमिद मुखम् ॥ ११४ ॥ अन्यच्च—सदाशयकर वक्त्रमामहच्छेदकारकम् ।
इह जगति लोकानामनुकम्पाप्रवर्तकम् ॥ ११५ ॥ दानाख्य तदिदं भद्र!, वर्णित प्रथमं मुखम् । भूपतेरस्य शीलाख्यं, द्वितीयमधुना
शृणु ॥ ११६ ॥—य एते साधवो वत्स!, वर्तन्ते जैनसत्पुरे । यदिदं भाषते वक्त्र, तदेते सर्व प्रकुर्वते ॥ ११७ ॥ अष्टादश सहस्राणि,
नियमानां नरोत्तमाः । अस्यादेशेन कुर्वन्ति, सदैते वत्स! साधवः ॥ ११८ ॥ इदमेव हि सर्वस्वमिदमेव विभूषणम् । इदमालम्बन

ठना सदा । नि सङ्ग बहिरन्तश्च, मुनीना कुरुते मनः ॥ १५७ ॥ तपोयोग इति ख्यात , सन्तुष्ट: पञ्चमो नरः । युक्तो द्वादशभिर्वत्स[1],
साश्रिकैर्वरमानुषैः ॥ १५८ ॥ एतेषा च प्रभावेण, मानुषाणा नरोत्तम । यद्वेष कुरुते जैने, पुरे तत्ते निवेदये ॥ ११९ ॥ सर्वाहारप
रित्यागाभि स्तुह कुरुते जनम् । वीर्यं च वर्धयत्येष, कारयन्न्यूनभोजनम् ॥ १६० ॥ असादेशेन कुर्वन्ति, नानाऽभिग्रहसुन्दरम् । मुनयो
वृत्तिसक्षेप, क्षमसातविवर्धनम् ॥ १६१ ॥ तथा—रसभोग न कुर्वन्ति, मोहोद्रेकाविकारणम् । सत्यावेशाभिषेवन्ते, कायक्लेश सुखावहम्
॥ १६२ ॥ कपायेन्द्रिययोगैश्च, सलीनास्तात[2] साधवः । विविक्तचर्यया नित्यमासते तेन चोदिताः ॥ १६३ ॥ प्रायश्चित्त च दशधा,
विनय च चतुर्विधम् । वैयावृत्य च कुर्वन्ति, दशधैवास्य वीर्यत ॥ १६४ ॥ पञ्चप्रकारं स्वाध्याय, द्वेधा ध्यान च सत्तमम् । सतत
कारयत्येष, मुनिलोक नरोत्तम ॥ १६५ ॥ गणोपधिशरीराणामाहारस्य च निःस्पृहाः । प्राप्ते काले प्रकुर्वन्ति, त्यागमेतेन चोदिता
॥ १६६ ॥ लेशोद्देशादिव वत्स[1], तपोयोगविचेष्टितम् । वर्णित विस्तरेणास्य, वर्णने नास्ति निष्ठितिः ॥ १६७ ॥ यस्त्वय दृश्यते वत्स[1],
षष्ठोऽमीषा मनोरम । वल्लभो मुनिलोकस्य, सयमाख्यो नरोत्तम ॥ १६८ ॥ स सप्तदशभिर्युक्तो, मानुषैर्जिनसत्पुरे । यथा विजृम्भते
तात[1], तत्ते सर्व निवेदये ॥ १६९ ॥ पापास्रवपिधानेन, सान्वयोर्वनिराकुलम् । पञ्चेन्द्रियविरोधेन, सतुष्ट विगतस्पृहम् ॥ १७० ॥
कपायतापप्रशमाविक्तनिर्वाणबन्धुरम् । मनोवाक्काययोगाना, नियमेन मनोहरम् ॥ १७१ ॥ सतत धारयत्येष, मुनिलोक नरोत्तमः ।
सयमाढ्य सवीर्येण, निमग्न धृतिसागरे ॥ १७२ ॥ अथवा—इलाजलानलैर्गतामनिलाखिलवासिनाम् । हिंसां द्वित्रिचतुष्पञ्चाक्षरूपीकाणां
निषेधति ॥ १७३ ॥ अचित्तमपि यद्वस्तु, हिंसाकरमसुन्दरम् । ग्रहण तस्य यत्नेन, वारयत्येष सयम ॥ १७४ ॥ प्रेक्षण स्थण्डिला

१ शान्ताबाधा॰ (प्र) २ सेषु स्थितानां

चारित्रधर्मोऽयमस्तु कस्य दुःखदम् ? ॥ १३८ ॥ तथापि पापिन सत्त्वा, मप्रचक्रनिवासिन । एके नैन विजानन्ति, निन्दन्त्यन्ये विपुण्यकाः ॥ १३९ ॥ तदेष ते महाराजश्चतुर्वदनसुन्दर । वर्णित साम्प्रत वक्ष्ये, परिवारमथाधुना ॥ १४० ॥ येषा विलोक्यते वत्स!, शुद्धस्फटिकनिर्मला । अथासने निविष्टाऽस्य, नारी सर्वाङ्गसुन्दरा ॥ १४१ ॥ इय हि विरतिर्नाम, भार्योऽस्य वरभूपतेः । समानगुणवीर्या च, भूभुजाऽनेन वर्तते ॥ १४२ ॥ तथाहि—मार्गजननी लोके, निर्वृतेर्मार्गदेशिका । गता सात्म्यमेतेन, न भिन्नेय प्रतीयते ॥ १४३ ॥ य एते पञ्च दृश्यन्ते, राजानोऽभ्यर्णवर्तिनः । एतस्यैव नरेन्द्रस्य, स्वाङ्गभूता वयस्यका ॥ १४४ ॥ तत्र च—आद्य सामायिकाख्योऽयं, भूपतिर्जैनसत्पुरे । नि शेषपापविरतिं, वत्स! कारयते सदा ॥ १४५ ॥ छेदोपस्थापनो नाम, द्वितीयो वत्स! भूपतिः । पापानुष्ठानसङ्घात, विशेषेण निषेधति ॥ १४६ ॥ परिहारविशुद्धीयस्तृतीयस्तु नरेश्वरः । साधूनां दर्शयत्युग्रं, तपोऽष्टादशमासिकम् ॥ १४७ ॥ यस्त्वेष दृश्यते वत्स!, चतुर्थो वरभूपतिः । स सूक्ष्मसपरायाख्यः, सूक्ष्मपापाणुनाशकः ॥ १४८ ॥ अत्यन्तनिर्मलो वत्स!, निर्धूताशेषकल्मष । एष सारो यथाख्यातः, पञ्चमो वरभूपतिः ॥ १४९ ॥ शरीरं जीवित प्राणा , सर्वस्व वस्त्वमुत्तमम् । चारित्रधर्मराजस्य, पञ्चाप्येते वयस्यकाः ॥ १५० ॥ यस्त्वेष निकटे वत्स!, दृश्यते मूलभूपतेः । सोऽस्यैव यतिधर्माख्य , सुतो राज्यधरः परः ॥ १५१ ॥ यद्दिर्विलोकिता भद्र!, ये त्वया मुनिपुङ्गवाः । अत्यन्तवल्लभस्तेषामेष राजसुतः सदा ॥ १५२ ॥ यैरेष दशभिर्वत्स!, परिवारितविग्रह । मानुषाणि प्रकुर्वन्ति, तानि यत्तन्निबोध मे ॥ १५३ ॥ योषिदाद्या क्षमा नाम, मुनीनामपि वल्लभा । तेषामुपदिशत्येषा, सदा रोषनिवारणम् ॥ १५४ ॥ डिम्भरूपमिद तात!, द्वितीयमिह मार्दवम् । करोति निजवीर्येण, साधूनामतिनम्रताम् ॥ १५५ ॥ तृतीयमार्जव नाम, डिम्भरूपमिद सदा । सर्वत्र सरल भाव, विधत्ते वत्स! सत्क्रियाम् ॥ १५६ ॥ एषा तु मुक्तता तात!, चतुर्थी छ-

अत्यन्तस्थूलहिंसायाः कश्चिद्विरतिसुन्दरम्। स्थूलालीकनिवृत्तं च, करोत्येष पुरे जनम् ॥ १९३ ॥ स्थूलस्तेयनिवृत्तं च, परदारपराङ्मुखम्।
कश्चित्सङ्क्षिप्तमानं च, सकलेऽपि परिग्रहे ॥ १९४ ॥ परित्यक्तनिशाभक्तं, कुर्वाणं च संवरे । युक्तोपभोगसम्भोगं, कर्मानुष्ठानकारकम्
॥ १९५ ॥ अनर्थदण्डविरतं, सामायिकरतं सदा । देशावकाशिके सक्तं, पौषधे कृतनिश्चयम् ॥ १९६ ॥ अतिथेः संविभागेन, परिपू-
तमनोमलम्। करोत्येष जनं वत्स!, गृहिधर्मोऽत्र सत्पुरे ॥ १९७ ॥ किं च—यो यावन्तं करोत्यत्र, निर्देशं शक्तितो जनः । तस्य
तावत्करोत्येष, फलं नास्त्यत्र संशयः ॥ १९८ ॥ या त्वेषा बालिका वत्स!, विस्फारितवरेक्षणा । दृश्यतेऽस्यैव भार्येयं, नाम्ना सद्गुणर-
क्तता ॥ १९९ ॥ वत्सला मुनिलोकस्य, गुरुणा विनयोद्यता । भर्तरि स्नेहवत्येयं, वत्स! सद्गुणरक्तता ॥ २०० ॥ तदेतौ जैनलोकानां,
राजपुत्रौ सभार्यकौ। विज्ञातव्यौ प्रकृत्यैव, सदानन्दकारकौ ॥ २०१ ॥ अनयोश्च सदा पित्रा, विहितं परिपालकं । अयं महत्तमो
वत्स!, सम्यग्दर्शननामकः ॥ २०२ ॥ अनेन रक्षितावेतौ, दृश्येते न कदाचन। एतौ हि वर्धयत्येष, निकटस्थोऽतिवत्सलः ॥ २०३ ॥
अन्यच्च—यानि ते कथितान्यत्र, सप्त तत्त्वानि सत्पुरे । दृढनिश्चयमेतेषु, भवचक्रपराङ्मुखम् ॥ २०४॥ शमसंवेगनिर्वेदकृपाऽऽस्तिक्यवि-
राजितम्। मैत्रीप्रमोदकारुण्यमाध्यस्थ्यैर्मोदितात्मकम् ॥ २०५ ॥ सदा प्रयाणकारूढं, निर्वृतौ गमनेच्छया । करोत्येष जनं वत्स!, स-
म्यग्दर्शननामकः ॥ २०६ ॥ त्रिभिर्विशेषकम्। या त्वेषा दृश्यते वत्स!, शुभवर्णा मनोहरा। इयमस्यैव सद्भार्या, सुदृष्टिर्नाम विश्रुता
॥ २०७ ॥ इयं हि जैनलोकानां, सन्मार्गे वीर्यशालिनी । चित्तस्थैर्यकरी ज्ञेया, विधिना पर्युपासिता ॥ २०८ ॥ एवं च स्थिते—यो
ऽसौ निवेदितस्तुभ्यं, कुदृष्टिसहितः पुरा । मिथ्यादर्शनसत्तात!, महामोहमहत्तम ॥ २०९ ॥ तदाचारविरुद्धं हि, सर्वमस्य विचेष्टि-
तम्। विज्ञेयं जगदानन्द, सुविचारितसुन्दरम् ॥ २१० ॥ स तन्नयति यत्नेन, महामोहबलं सदा। चारित्रधर्मराजस्य, बलमेष महत्तमः

दीनां, गृहस्थानामुपेक्षणम् । स्थानाधिकरणे सम्यक्, तद्भूमीना प्रमार्जनम् ॥ १७५ ॥ आहारोपधिशय्यानामशुद्धाधिकभावत । परिष्ठा-
पनमन्त्यम, मनोवाक्कायरक्षणम् ॥ १७६ ॥ विमुक्तभवकर्तव्यै, सतत सुसमाहितै । मुनिभिः कारयत्येष, सर्वमेतमरोत्तम ॥ १७७ ॥
तदिद लेशतो वत्स[1], चरित परिकीर्तितम् । नरस्य सयमाख्यस्य, शेषाणां शृणु साम्प्रतम् ॥ १७८ ॥ य एष सप्तमो वत्स[1], दृश्यते
पुरुषोत्तमः । यतिधर्मपरीवारे, सत्यनामातिसुन्दरः ॥ १७९ ॥ हितं मिताक्षरं काले, जगदाह्लादकारणम् । अस्यादेशेन भाषन्ते, वचन
मुनिपुङ्गवाः ॥ १८० ॥ शौचाभिधानो यो वत्स[1], वर्तते चाष्टमो नर । द्रव्यभावात्मिकां शुद्धिमस्यादेशेन कुर्वते ॥ १८१ ॥ यश्चिव
नवम तात[1], डिम्भरूप मनोहरम् । आकिञ्चन्यमिद नाम, मुनीनामतिवल्लभम् ॥ १८२ ॥ मचात्तसौख्य वत्स[1], बाह्यान्तरपरिग्रहम् ।
मुनिभिर्मोचयत्येषच्छुद्धस्फटिकनिर्मलम् ॥१८३॥ इद तु दशम तात[1], गर्भ(डिम्भ)रूप मनोहरम् । ब्रह्मचर्यमिति स्यात, मुनीना हृदयप्रियम्
॥ १८४ ॥ दिव्यौदारिकसम्य च, मनोवाक्काययोगतः । अब्रह्म वारयत्येतत्कृतकारणमोदने ॥ १८५ ॥ तदेष दशभिर्वत्स[1], मानुषै
परिवारितः । पुरेऽत्र विलसत्येव, यतिधर्मे सलीलया ॥ १८६ ॥ एषाऽत्र विलसद्दीप्तिर्बालिकाऽमललोचना । सद्भावसारता नाम,
भार्याऽस्य मुनिवल्लभा ॥ १८७ ॥ अस्यां जीवति जीवन्त्यां, मरणेऽस्या न जीवति । अत्यर्थं रक्तचित्तोऽस्यां, राजसूनुरय सदा ॥ १८८ ॥
किं चेह बहुनोक्तेन?, दाम्पत्यमिदमीदृशम् । निर्मिथ्यस्नेहगर्भार्थं, न दृष्ट कुत्रचिन्मया ॥ १८९ ॥ 'यः पुनर्दृश्यते तात[1], द्वितीयोऽय
कुमारकः । गृहिधर्माभिधानोऽसौ, कनिष्ठोऽस्य सहोदरः ॥ १९० ॥ यदेष कुरुते वत्स[1], युक्तो द्वादशमानुषै । जैनेन्द्रसत्पुरे चित्तं,
लसमुरामलीलया ॥ १९१ ॥ तदह वर्णयिष्यामि, पुरतस्ते वरेक्षण[1] । चेतः समाहित कृत्वा, तच्च वत्सावधारय ॥ १९२ ॥ (युग्मम्)—

1 आधाकर्मादिदोषात् अतिरिक्तसमानाद्य

ऽनेन हेतुना ॥ २२७ ॥ तृतीयोऽवधिनामाय, सद्बोधस्य वयस्यकः । अनेकरूपविस्तारकारकोऽयमुदाहृतः ॥ २३१ ॥ कचिद्दीर्घं कचि त्र्रस्व, कचित् स्तोक कचिद्बहु । वस्तुजात जगत्यत्र, विलोकयति लीलया ॥ २३२ ॥ चतुर्थं पुरुषो वत्स!, मनःपर्यायनामक । साक्षात्करोति वीर्येण, परेषा यन्मनोगतम् ॥ २३३ ॥ मनुष्यलोके नास्त्यत्र, चित्त तस्मात्! किञ्चन । अनेन यन्न दृश्येत, धीमता मायवेशिना ॥ २३४ ॥ पञ्चम पुरुषो वत्स!, केवलो नाम विश्रुतः । नि शेषज्ञेयविस्तारमेय पश्यति सर्वदा ॥ २३५ ॥ निर्वृति नगरीं यान्ति, ये जना जैनसत्पुरात् । तेषामेष प्रकृत्यैव, नायकः पुरुषोत्तमः ॥ २३६ ॥ वृतेष पञ्चभिर्वत्स!, वयस्यैः परिवारितः । सद्बोधसचिवो लोके, साक्षादिव दिवाकर. ॥ २३७ ॥ प्रकर्षेणोदित माम!, स सन्तोषमहीपति । न दर्शितस्त्वयाऽद्यापि, यत्र मेऽत्यन्तकौतुकम् ॥ २३८ ॥ ततस्तन्मातुलेनोक्त, वत्स! योऽय पुरः स्थितः । सयमस्य स विज्ञेयः, सन्तोषो नात्र सशय ॥ २३९ ॥ प्रकर्षेणोक्तम्—यस्योपरि समायाता, महामोहादिभूभुजः । विक्षेपेण स सन्तोषो, नैष किं मूलनायकः? ॥ २४० ॥ विमर्शेनोदित वत्स!, नैवाय मूलनायक । चारित्रधर्मराजस्य, पदातिरिति गृह्यताम् ॥ २४१ ॥ शूरो नीतिपरो दक्ष, सन्धिविग्रहवेदक । तेनैष तन्त्रपालत्वे, नियुक्तो मूलभूभुजा ॥ २४२ ॥ सपूर्णबलसामग्र्या, अमवोद्दामलीलया । अनेन स्पर्शनादीनि, तानि दृष्टानि कुत्रचित् ॥ २४३ ॥ ततोऽभिभूय तान्येष, समाहात्म्येन निर्वृतौ । नयति स जन कञ्चिदुल्लेनैषां महीभुजाम् ॥ २४४ ॥ ततो विज्ञाय वृत्तान्तमेन ते जनतापेया । महामोहादिभूपालाश्चलिता रणकाम्यया ॥ २४५ ॥ ततस्तैः स्वधिया वत्स!, कल्पितो मूलनायकः । पदातिरपि सन्तोषस्तत्रैव हन्त कारणम् ॥ २४६ ॥ तावन्मात्र जनो वेत्ति, यावन्मात्रं किलेक्षते । यतः सितोदरोऽपीह, कृष्णः सर्पोऽभिधीयते ॥ २४७ ॥ अनेन स्पर्शनादीनि, निहतानीति वार्तया । अस्योपरि यथा रोपस्तेषा शेषेषु नो तथा ॥ २४८ ॥ सन्तोषमुररीकृत्य, ततो विग्रहवाञ्छया ।

॥ २११ ॥ सम्यग्दर्शनसञ्ज्ञस्य, तस्यात्र व्यवस्थितः । स एव शत्रुः परमो, मिथ्यादर्शननामकः ॥ २१२ ॥ एवं च स्थिते—निरूपय भवत्येष, किञ्चिद्दासाय कारणम् । क्षयेण प्रतिपक्षस्य, प्रशमेनोभयेन वा ॥ २१३ ॥ तत्र रूपत्रय वत्स', जायेतास्य स्वभावतः । यच्च सपादयत्येष, मन्त्री सद्बोधनामकः ॥ २१४ ॥ अयं हि सचिवो वत्स', सद्बोधो भुवनोदरे । तन्नास्ति यन्न जानीते, पुरुषार्थप्रसाधकम् ॥ २१५ ॥ भवद्भूतभविष्यत्सु, भावेषु भवभाविषु । विज्ञातु प्रभवत्येष, सूक्ष्मान्यवहितेषु च ॥ २१६ ॥ किं चात्र बहुनोक्तेन?, जगदेव चराचरम् । अनन्तद्रव्यपर्यायं, वीक्षते विमलेक्षणः ॥ २१७ ॥ निपुणो नीतिमार्गेषु, वत्सलश्च महीपतेः । चिन्तको राज्यकार्याणां, बले च विहितादरः ॥ २१८ ॥ प्रियो महत्तमस्योच्चैस्तस्य च स्थिरसाकरः । सकलेऽपि जगत्यत्र, सचिवो नास्त्यमूदृशः ॥ २१९ ॥ किं च—ज्ञानसंवरणस्याय, प्रतिपक्षतया स्थितः । क्षयोपशमतस्तस्य, क्षयाच्च द्विविधो मतः ॥ २२० ॥ इयं तु निकटे वत्स', निर्मलाक्षी सुलोचना । मन्त्रिणोऽवगतिर्नाम, भार्याऽस्यैव वराननाः ॥ २२१ ॥ स्वरूपं जीवितं प्राणाः, सर्वस्य वर्ततेऽनघा । इयमस्य सदा पत्नी, शरीरान्यतिरेकिणी ॥ २२२ ॥ तथा—य एते पञ्च दृश्यन्ते, त इमे पुरुषोत्तमाः । अस्यैव तु सद्बोधस्य, साङ्गीभूता वयस्यकाः ॥२२३॥ आद्योऽयामिनियोधोऽयं, वयस्यः पुरवासिनाम् । इन्द्रियानिन्द्रियज्ञानं, जनानां जनयत्यलम् ॥ २२४ ॥ द्वितीयः पुरुषो भद्र', प्रसिद्धोऽयं सदागमः । यस्यावेद्ये स्थितं सर्वं, पुरमेतन्न संशयः ॥ २२५ ॥ कार्याणि मन्त्रयत्येष, निखिलान्यपि भूभुजाम् । वचःपाटवयुक्तोऽयं, मूकाः शेषा मनुष्यकाः ॥ २२६ ॥ यतः सदागमस्यास्य, दृष्ट्वा वचनकौशलम् । सद्बोधोऽनेन भूपेन, मन्त्रित्वे स्थापितः पुरा ॥ २२७ ॥ अयं सदागमोऽमीषां, सर्वेषां वत्स! भूभुजाम् । वत्सिश्च जैनलोकानां, श्रेयः परमकारणम् ॥ २२८ ॥ अनेन रहितं वत्स', न कदाचिदिदं बलम् । पुरं चेदं जगत्यत्र, स्वरूपेण प्रकाशते ॥ २२९ ॥ सदैव सर्वकार्याणामुपदेष्टा सदागमः । द्वितीयः पुरुषो वत्स', प्रधानो-

ऽनेन हेतुना ॥ २२० ॥ तृतीयोऽवधिनामाय, सद्बोधस्य वयस्यकः । अनेकरूपविस्तारकारकोऽयमुदाहृतः ॥ २३१ ॥ कश्चिद्दीर्घं कचि
त्र्ह्रस्व, कचित् स्तोक कचिद्बहु । वस्तुजात जगत्यत्र, विलोकयति लीलया ॥ २३२ ॥ चतुर्थः पुरुषो वत्स!, मनःपर्यायनामकः । सा-
क्षात्करोति वीर्येण, परेषा यन्मनोगतम् ॥ २३३ ॥ मनुष्यलोके नास्त्यत्र, चित्त तस्यास! किञ्चन । अनेन यन्न दृश्येत, धीमता भावचे-
विना ॥ २३४ ॥ पञ्चम पुरुषो वत्स!, केवलो नाम विश्रुतः । निःशेषज्ञेयविस्तारमेष पश्यति सर्वदा ॥ २३५ ॥ निर्वृतिं नगरीं
यान्ति, ये जना जैनसत्पुरात् । तेषामेष प्रकृत्यैव, नायकः पुरुषोत्तमः ॥ २३६ ॥ तदेष पञ्चभिर्वत्स!, वयस्यैः परिवारित । सद्बोध-
सचिवो लोके, साक्षादिव दिवाकरः ॥ २३७ ॥ प्रकर्षेणोदित माम!, स सन्तोषमहीपतिः । न दर्शितस्त्वयाऽद्यापि, यत्र मेऽत्यन्त-
कौतुकम् ॥ २३८ ॥ ततस्तन्मातुलेनोक्तं, वत्स! योऽय पुरः स्थितः । सयमस्य स विज्ञेयः, सन्तोषो नात्र सशय ॥ २३९ ॥ प्रकर्षे-
णोक्तम्—यस्योपरि समायाता, महामोहादिभूभुजः । विक्षेपेण स सन्तोषो, नैष किं मूलनायकः? ॥ २४० ॥ विमर्शेनोदित वत्स!,
नैवाय मूलनायक । चारित्रधर्मराजस्य, पदातिरिति गृह्यताम् ॥ २४१ ॥ शूरो नीतिपरो दक्षः, सन्धिविग्रहवेदक । तेनैष तन्त्रपालत्वे,
नियुक्तो मूलभूभुजा ॥ २४२ ॥ सपूर्णवलसामग्र्या, भ्रमतोद्दामलीलया । अनेन स्पर्शनादीनि, तानि दृष्टानि कुत्रचित् ॥ २४३ ॥ ततो-
ऽभिभूय तान्येष, स्वमाहात्म्येन निर्वृतौ । नयति स्म जन कश्चिद्बलेनैषा महीभुजाम् ॥ २४४ ॥ ततो विज्ञाय वृत्तान्तमेन ते जनवा-
र्तया । महामोहादिभूपालाश्चलिता रणकाम्यया ॥ २४५ ॥ ततस्तैः स्वधिया वत्स!, कल्पितो मूलनायकः । पदातिरपि सन्तोषस्तत्रेद
हन्त कारणम् ॥ २४६ ॥ तावन्मात्रं जनो वेत्ति, यावन्मात्र किलेक्षते । यतः शिवोदरोऽपीह, कृष्णः सर्पोऽभिधीयते ॥ २४७ ॥
अनेन स्पर्शनादीनि, निहतानीति वार्तया । अस्योपरि यथा रोषस्तेषा शेषेषु नो तथा ॥ २४८ ॥ सन्तोषमुररीकृत्य, ततो विग्रहवाञ्छया ।

॥ २११ ॥ सम्यग्दर्शनसञ्ज्ञस्य, तस्मादत्र व्यवस्थितः । स एव शत्रुः परमो, मिथ्यादर्शननामकः ॥ २१२ ॥ एवं च स्थिते—त्रिरूपश्च भवत्येष, किञ्चिदासाद्य कारणम् । क्षयेण प्रतिपक्षस्य, प्रशमेनोभयेन वा ॥ २१३ ॥ तच्च रूपत्रयं वत्स!, जायेतास्य स्वभावतः । यश्चा सपादयत्येष, मन्त्री सद्बोधनामकः ॥ २१४ ॥ मम हि सचिवो वत्स!, सद्बोधो भुवनोदरे । तन्नास्ति यन्न जानीते, पुरुषार्थप्रसाधकम् ॥ २१५ ॥ भवद्भूतभविष्यत्सु, भावेषु भवभाविषु । विज्ञातुं प्रभवत्येष, सूक्ष्मव्यवहितेषु च ॥ २१६ ॥ किं चात्र बहुनोक्तेन?, जगदेष परापरम् । अनन्तद्रव्यपर्यायं, वीक्षते विमलेक्षणः ॥ २१७ ॥ निपुणो नीतिमार्गेषु, वत्सलश्च महीपते । चिन्तको राज्यकार्याणां, बले च विहितादरः ॥ २१८ ॥ प्रियो मदुत्तमस्योच्चैस्तस्य च स्थिरताकरः । सकलेऽपि जगत्यत्र, सचिवो नास्त्यमूदृशः ॥ २१९ ॥ किं च—ज्ञानसंवरणस्याय, प्रतिपक्षतया स्थितः । क्षयोपशमतस्तस्य, क्षयाच्च द्विविधो मतः ॥ २२० ॥ इयं तु निकटे वत्स!, निर्मलाङ्गी सुलोचना । मन्त्रिणोऽवगतिर्नाम, भार्योऽस्यैव वरानना ॥ २२१ ॥ स्वरूपं जीवितं प्राणाः, सर्वस्वं वर्ततेऽनघा । इयमस्य सखा पत्नी, शरीराव्यतिरेकिणी ॥ २२२ ॥ तथा—य एते पञ्च दृश्यन्ते, त इमे पुरुषोत्तमाः । अस्यैव तु सद्बोधस्य, स्वाङ्गीभूता वयस्यकाः ॥२२३॥ आद्योऽत्राभिनिबोधोऽयं, वयस्यः पुरवासिनाम् । इन्द्रियानिन्द्रियज्ञानं, जनानां जनयत्यलम् ॥ २२४ ॥ द्वितीयः पुरुषो भद्र!, प्रसिद्धोऽयं सदागमः । यस्यादेशे स्थितं सर्वं, पुरमेतन्न संशयः ॥ २२५ ॥ कार्याणि मन्त्रयत्येष, निखिलान्यपि भूभुजाम् । वचःपाटवयुक्तोऽयं, मूकाः शेषा मनुष्यकाः ॥ २२६ ॥ यतः सदागमस्यास्य, दृष्ट्वा वचनकौशलम् । सद्बोधोऽनेन भूपेन, मन्त्रित्वे स्थापितः पुरा ॥ २२७ ॥ अयं सदागमोऽमीषां, सर्वेषां वत्स! भूभुजाम् । वहिश्च जैनलोकानां, श्रेयः परमकारणम् ॥ २२८ ॥ अनेन रहितं वत्स!, न कदाचिदिदं बलम् । पुरं चेदं जगत्यत्र, स्वरूपेण प्रकाशते ॥ २२९ ॥ सदैव सर्वकार्याणामनुप्रवेष्टा सदागमः । द्वितीयः पुरुषो वत्स!, प्रधानो-

समीपा महीभुजाम् ॥ २६७ ॥ ततश्च—असङ्ख्यातजनं वत्स !, पूरितं भूरिभूमिपैः । निःशेषमिदमास्थानं, को हि वर्णयितुं क्षमः ? ॥ २६८ ॥ ततो मयेदं ते वत्स !, समासेन निवेदितम् । गच्छावः साम्प्रतं द्वारे, यदि पूर्णं कुतूहलम् ॥ २६९ ॥ एवं भवतु तेनोक्ते, विनिर्गत्य विलोकितम् । चतुरङ्गं बलं ताभ्यां, तदीयं तच्च कीदृशम् ॥ २७० ॥—गाम्भीर्यौदार्यशौर्यादिनामभिः स्यन्दनैः सदा । प्रेङ्खद्ध्वजपताकाग्रं घणघणारावपूरिताक्षेपविष्टपम् ॥ २७१ ॥ यशःसौष्ठवसौजन्यप्रश्रयादिमहागजैः । विलसत्कण्ठनिर्घोषसरुद्धभुवनोदरम् ॥ २७२ ॥ बुद्धिपाटववाग्मित्वनैपुण्यादितुरङ्गमैः । महाहेषारवापूर्णसत्प्रजाकर्णकोटरम् ॥ २७३ ॥ अचापलमनस्वित्वदाक्षिण्यादिपदातिभिः । अलब्धगाधविस्तीर्णक्षिमिवोदधिविभ्रमम् ॥ २७४ ॥ चतुर्भिः कलापकम् । ततश्चैवंविधं वीक्ष्य, चतुरङ्गं महाबलम् । प्रकर्षश्चेतसा तुष्टः, प्रोवाच निजमातुलम् ॥ २७५ ॥ यथेष्टमधुना माम !, पूरितं मे कुतूहलम् । यदत्र किञ्चिद्द्रष्टव्यं, तत्सर्वं दर्शितं त्वया ॥ २७६ ॥ तथाहि —दर्शितं भवचक्रं मे, नानाश्चर्यान्वसङ्कुलम् । महामोहादिवीर्यं च, कारणैरपरापरैः ॥ २७७ ॥ विवेकपर्वतश्चायं, दर्शितो मे मनोहरः । निवेदितं च सल्लोकैः, पूर्णं सात्त्विकमानसम् ॥ २७८ ॥ शिखरं चाप्रमत्तत्वं, जैनं चेदं महापुरम् । युक्तं महात्मभिर्लोकैर्दर्शितं मम सुन्दरम् ॥ २७९ ॥ तथा चित्तसमाधानो, मण्डपो वेदिका च मे । त्वया निःस्पृहताऽऽख्याता, जीववीर्यं च विष्टरम् ॥ २८० ॥ वर्णितश्च महाराजः, साक्षात्करणपूर्वकम् । प्रत्येकं वर्णिताः सर्वे, भूपालास्तस्य सेवकाः ॥ २८१ ॥ इदं च दर्शितं रम्यं, चतुरङ्गं महाबलम् । एवं च कुर्वता माम !, नास्ति तदत्र मे क्लमम् ॥ २८२ ॥ जनितः पूर्वपापोऽहं, कृतो यदनुग्रहः । कृपापरीतचित्तेन, पूरिता मे मनोरथा ॥ २८३ ॥ तथापि रमणीयेऽत्र, वस्तुमिच्छामि साम्प्रतम् । दिनानि कतिचिन्माम !, लीलया जैनसत्पुरे ॥ २८४ ॥ किं च—स्थितो मासद्वयं यावत्, सद्विचारपरायणः । पुरे तथा त्वया प्राप्तो, जातोऽहं त्वत्प्रसादतः ॥ २८५ ॥ अहं च परमां काष्ठां, नेयो

महामोहादयो वत्स!, स्वपुरेभ्यो विनिर्गताः ॥ २४९ ॥ चित्तवृत्तिमहाटव्यां, रणमेषामनेकधा । भग्ना न च भग्नाो, [illegible] नृप-
राजयो ॥ २५० ॥ यत —कश्चिज्जयति सन्तोषस्तत्पालोऽरिसंहतिम् । प्रभवन्ति कचित्तेऽपि, महामोहादिभूभुजः ॥ २५१ ॥ एवं च
स्थिते—सदा सैन्यद्वयस्यास्य, रुषाऽन्योऽन्य जिगीषतः । कालो गच्छति वत्सास्य!, न जाने किं भविष्यति? ॥ २५२ ॥ स एष [illegible]-
स्तुष्य, मया सन्तोषतश्च । आख्यातश्चास्य वृत्तान्तो, यत्र तेऽत्यन्तकौतुकम् ॥ २५३ ॥ या त्वस्य पार्श्वे पश्यासी, दृश्यते वत्स! बा-
लिका । सा निष्पिपासिता नाम, भार्याऽस्यैव वरानना ॥ २५४ ॥ शब्दरूपरससस्पर्शगन्धेषु सुधिया मया । [illegible], राग-
द्वेषविवर्जितम् ॥ २५५ ॥ लाभालाभे सुखे दुःखे, सुन्दरेऽसुन्दरेऽपि च । तयाऽऽश्वासिते जाते, सन्तुष्टिं जायतेऽलम् ॥ २५६ ॥
तदेवं वत्स! बुध्यस्व, निर्विकल्पेन चेतसा । चारित्रधर्मराजोऽत्र, नायक परमार्थतः ॥ २५७ ॥ अस्य च—यतिधर्मः सुतो ज्यायान्,
गृहिधर्मः कनिष्ठकः । मन्त्री सद्बोधनामाय, निविष्टो राज्यचिन्तकः ॥ २५८ ॥ महत्तमस्तु विज्ञेयः, सम्यग्दर्शननामकः । सन्तोषस्तन्त्र-
पालोऽप्यमेवं वत्सावधारय ॥ २५९ ॥ महामोहादय सर्वे, यथा भुवनतापकाः । तथैते वत्स! विज्ञेया, भुवनाह्लादकारिणः ॥ २६० ॥
एते हि जगदालम्बा, एते हितविधायकाः । एते समस्तजन्तूनां पारमार्थिकबान्धवाः ॥ २६१ ॥ एते निरन्तससारसागरोत्तारकारकाः ।
अनन्तानन्दसन्दोहदायका जगतो मताः ॥ २६२ ॥ चारित्रधर्मराजाद्याः, सर्वेऽप्येते नरेश्वराः । सुखहेतव एवात्र, सर्वेषामपि देहिनाम्
॥ २६३ ॥ तदेते सात्त्विकास्तात!, तावदित्थ मयाऽऽख्याताः । चारित्रधर्मराजस्य, बान्धवास्ते निवेदिताः ॥ २६४ ॥ ये त्वमी वेदिका
ऽभ्यर्णे, वर्तन्ते मण्डपस्थिताः । शुभाशयादयस्तात!, तेऽप्यस्यैव पदातयः ॥ २६५ ॥ अस्मादेशेन कुर्वन्ति, सुन्दराणि सदा जने । एते
कार्याणि भूपाला, निर्मिथ्यममृतोपमाः ॥२६६॥ किं च—मनुष्या योषितो डिम्भा, ये लोकाः सुखहेतवः । विवर्तन्ते समस्तास्ते, मध्ये

ज्वलविद्युदलङ्करणा । कृतसन्ततगर्जितधीररवा, हृतगोपिकभास्करजाररता ॥ २९९ ॥ रटदुन्नटदर्दुरसिक्तनरा, चलशुभ्रबलाकहासपरा । गिरिकोटरनृत्तशिखण्डिवरा, बहुलोकमनोहररूपधरा ॥ ३०० ॥ सुसुगन्धिकदम्बपरागवहा, विटकोटिविदारणमोदसहा । इति रूपविलासलसत्कपटा, भुवनेऽत्र रराज यथा कुलटा ॥ ३०१ ॥ अथ तां तादृशीं वीक्ष्य, प्रावृष हृष्टमानसः । प्रकर्षो गमनोत्सुकः, प्रोवाच निजमातुलम् ॥ ३०२ ॥—गम्यतामधुना माम!, त्वरित तातसन्निधौ । यतोऽमी शीतलीभूता, वर्तन्ते सुगमाः पथाः ॥ ३०३ ॥ विमर्शेनोदित वत्स!, मैव वोचः कदाचन । यतोऽधुना व्यवच्छिन्नौ, विशेषेण गमागमौ ॥ ३०४ ॥ तथाहि—सुच्छन्नगृहमध्यस्था, स्वाधीनदयिताननाः । वर्षासु धन्या गण्यन्ते, अनेर्ये न प्रवासिनः ॥ ३०५ ॥ तथाहि—पश्यतु वत्स!—जलपूरितमार्गेषु, पङ्कक्लिन्नेषु गच्छत । स्खलित्वा पतितानेते, हसन्ति कुटजोत्कराः ॥ ३०६ ॥ निपतद्वारिधारौघहृता ये यान्ति पापिनः । देशान्तरेषु तान्मेघो, मारयामीति गर्जति ॥ ३०७ ॥ एव व्यवस्थिते तात!, मुच्यतां गमनादर । यथेयन्त स्थितः काल, स्थीयतेव तथाऽधुना ॥ ३०८ ॥ किं च—गच्छमत्र यतुः कालो, न दोषाय गुणावहः । यतः सोऽनुक्षण वत्स!, जायते सव वृद्धये ॥ ३०९ ॥ एव भवतु तेनोक्ते, पुनर्मासचतुष्टयम् । स्थित्वा समागतौ गेहे, दृष्टौ स्वस्रीयमातुलौ ॥ ३१० ॥ अथ प्रविष्टौ तौ गेहे, वृत्तास्थाने शुभोदये । भार्यायुक्ते च तस्यैव, निकटस्थे विचक्षणे ॥ ३११ ॥ ततो विधाय सन्नृप्त्या, प्रणाम विहिताञ्जली । तेषां पुरो निविष्टौ तौ, विनयात्क्षुब्धभूतले ॥ ३१२ ॥ बलादुत्थाप्य मुक्त्वाऽसौ, विमर्शः स्निग्धचेतसा । आलिङ्गितः प्रयत्नेन, वक्त्राग्रो च पुन पुन ॥ ३१३ ॥ प्रकर्षोऽपि समालिङ्ग्य, स्नेहनिर्भरमानसैः । निजाङ्के स्थापित सर्वै, परिपाट्याऽतिवल्लभः ॥ ३१४ ॥ आघ्रातो मूर्धदेशे च, कुशल च मुहुर्मुहु । आनन्दोदकपूर्णाक्षैः, पृष्टः सर्वैः समातुलः ॥ ३१५ ॥ ततो यथा विनिर्गत्य, गेहाद्देशेषु हिण्डितौ । ततोऽन्तरङ्गदेशेषु, यथा पर्यटितौ पुनः

मामेन सर्वथा । अतो जैनपुरे तावत्त्र त्व वस्तुमर्हसि ॥ २८६ ॥ ततस्तन्मातुलेनोक्त, या तवेच्छा प्रवर्तते । तामेव त्वत्सुखाकाङ्क्षी, किं मनुते बन्धो जनः ? ॥ २८७ ॥ महाप्रसाद इत्युक्त्वा, ततस्तत्रैव सत्पुरे । स्थितो मासद्वय यावत्स प्रकर्ष समातुल ॥ २८८ ॥ इतश्च मानवावासे, वसन्तो लक्षितस्तदा । आदेशेन महादेव्याः, प्राप्तो ग्रीष्म सुदारुणः ॥ २८९ ॥ यत्र ग्रीष्मे—जगत्कोष्ठकमध्यस्थो, लोह-गोलकसन्निभः । ध्मायते चण्डवातेन, जगद्दाहकरो रवि ॥ २९० ॥ जायते पत्रशाटस्तरूणामलं हीयते देहिना यत्र देहे बल, पीयते प्राणिभिर्भूरिधाराजल क्षुभ्यते चासमेषां तृषाऽप्यर्गलम् । दह्यते तीव्रतापेन सर्वो जनः स्विद्यते खेदनिर्वेदित तन्मनो, वान्ति वाता सदा जगत्तापिनः शुष्कपत्रावलीमर्मरारावनिः ॥ २९१ ॥ अपि च—भानोरिव प्रतापेन, सतुष्ट वर्धित दिनम् । स्वामिनोऽभ्युदये सर्व, सन्तोषादभिवर्धते ॥ २९२ ॥ यत्र च विदलिता मल्लिकाः विकसिता जात्यपाटलाः श्यामलित कुसुमभरेण शिरीषवन सुभगीभूताश्चन्द्र-किरणाः हृदयदयिता जलाशया मनोऽभिरुचिता मौक्तिकहारयष्टयः अभिवाञ्छमानि विमलहर्म्यतलानि प्रियतमानि चन्दनविलेपनानि अमृतायन्ते तालवृन्तव्यजनकानि सुखायन्ते शिशिरकिसलयकुसुमस्रस्तरा क्लाम्यन्ति बहिःशरीरनिक्षिप्ता अपि जनानामन्तर्मानसे चन्दन-जलार्द्रा इति । तत्रैवंविधे काले, भागिनेयमभाषत । गच्छावः साम्प्रत वत्स !, स्वस्थानमिति मातुलः ॥ २९३ ॥ प्रकर्ष प्राह ग-मने, दारुणोऽवसरोऽधुना । तमाह माम ! शक्नोमि, गन्तुमेवंविधेऽध्वनि ॥ २९४ ॥ ततो मासद्वय तिष्ठ, माम ! सन्तापदारुणम् । मे-नाद शीतलीभूते, विक्चक्रे यामि सत्वरम् ॥ २९५ ॥ किं च—विचारपरयोः स्थानभावयोर्गुणकारणम् । अत्र जैनपुरे माम !, मा मस्था निष्प्रयोजनम् ॥ २९६ ॥ यतः—मम स्थैर्य भवेदेव, पुरस्यास्य गुणोत्करे । तवस्त्वातोऽपि जायेत, मद्गुणादत्र सद्धीः ॥ २९७ ॥ एव भवतु तेनोक्ते, ततस्तत्रैव सत्पुरे । तिष्ठतोः प्रावृडायाता, तयोः सा हन्त कीदृशी ॥ २९८ ॥—घनतुङ्गपयोधरभारधरा, लसदु-

ज्वलविद्युदलङ्करणा । कृतसन्ततगर्जितधीररवा, दृढगोपितभास्करजाररवा ॥ २९९ ॥ रटदुत्कटदर्दुरखिन्ननरा, चलशुभ्रबलाहकहासपरा ।
गिरिकोटरनृत्तशिखण्डिवरा, पथुलोकमनोहररूपधरा ॥ ३०० ॥ सुसुगन्धिकदम्बपरागवहा, विटकोटिविदारणमोदसहा । इति रूपविला-
सलसत्कपटा, भुवनेऽत्र रराज यथा कुलटा ॥ ३०१ ॥ अथ तां तादृशीं वीक्ष्य, प्रावृष हृष्टमानसः । प्रकर्षो गमनोत्सुकः, प्रोवाच
निजमातुलम् ॥ ३०२ ॥—गम्यतामधुना माम!, त्वरितं शावसमिधौ । यतोऽमी शीतलीभूता, वर्तन्ते सुगमाः पथाः ॥ ३०३ ॥
विमर्शेनोदितं वत्स!, मैव वोचः कथाचन । यतोऽधुना व्यवच्छिन्नौ, विशेषेण गमागमौ ॥ ३०४ ॥ तथाहि—सुच्छन्नगृहमध्यस्थाः,
स्वाधीनदयितानना । वर्षासु धन्या गम्यन्ते, जनैर्ये न प्रवासिन ॥ ३०५ ॥ तथाहि—पश्यतु वत्स!—जलपूरितमार्गेषु, पङ्कक्लिन्नेषु
गच्छत । स्खलित्वा पतितानेते, हसन्ति कुटजोत्कराः ॥ ३०६ ॥ निपतद्वारिधारौघहता ये यान्ति पापिनः । देशान्तरेषु तान्मेघो,
मारयामीति गर्जति ॥ ३०७ ॥ एवं व्यवस्थिते तात!, मुच्यतां गमनादरः । यथेयन्तं स्थितं कालं, तिष्ठाग्रैव तथाऽधुना ॥ ३०८ ॥
किं च—गच्छतोऽत्र वर्षुः कालो, न दोषाय गुणावहः । यतः सोऽनुक्षणं वत्स!, जायते तव वृद्धये ॥ ३०९ ॥ एवं भवतु तेनोक्ते,
पुनर्मासचतुष्टयम् । स्थित्वा समागतौ गेहे, हृष्टौ स्वस्त्रीयमातुलौ ॥ ३१० ॥ अथ प्रविष्टौ तौ गेहे, दृष्टास्थाने शुभोदये । भार्यायुक्ते च
तस्यैव, निकटस्थे विचक्षणे ॥ ३११ ॥ ततो विधाय सङ्कथ्या, प्रणाम विहिताञ्जली । तेषां पुरो निविष्टौ तौ, विनयात्क्षुद्रभूतले
॥ ३१२ ॥ बलादुत्थाप्य मुख्याऽसौ, विमर्शः स्निग्धचेतसा । आलिङ्गितः प्रयत्नेन, चक्षुर्भ्यां च पुनः पुनः ॥ ३१३ ॥ प्रकर्षोऽपि समा-
लिङ्ग्य, स्नेहनिर्भरमानसैः । निजाङ्के स्थापितः सर्वैः, परिपाट्याऽतिवल्लभः ॥ ३१४ ॥ आघ्रातो मूर्धदेशे च, कुशलं च मुहुर्मुहुः । आ-
नन्दोदकपूर्णाक्षैः, पृष्टः सर्वैः समाकुलः ॥ ३१५ ॥ ततो यथा विनिर्गत्य, गेहाद्वासेषु हिण्डितौ । ततोऽन्तरङ्गदेशेषु, यथा पर्यटितौ पुनः

॥ ३१६ ॥ यथा पुरद्वयं दृष्ठ, यथा दृष्टा महाटवी । विलोकित यथा स्थान, महामोहादिमूभुजाम् ॥ ३१७ ॥ रसनामूलशुद्धिश्च, यथा सम्यग्विनिश्चिता । यथैव वर्तते पुत्री, रागकेसरिमन्त्रिणः ॥ ३१८ ॥ कुतूहलवशेनैव, भवचक्र यथा गतौ । निरीक्षित च तत्सर्व, नाना-वृत्तान्तसङ्कुलम् ॥ ३१९ ॥ यथा दृष्टा महात्मानो, विवेकवरपर्वते । चारित्रधर्मराजस्य, यथा स्थान विलोकितम् ॥ ३२० ॥ यथा दृष्ट स सन्तोषो, यच्च तेन विचेष्टितम् । यच्च कारणमुद्दिश्य, भूरिकालोऽतिवाहित ॥ ३२१ ॥ तदिद तेन नि शेष, विमर्शेन परिस्फुटम् । पुरो विचक्षणादीनां, विस्तरेण निवेदितम् ॥ ३२२ ॥ सप्तमि' कुलकम् । इतश्च मासमध्ये लौल्यस्यासौ जड । रसना लोलतावाक्यैर्न चेतयति किञ्चन ॥ ३२३ ॥ स तस्या लालने सक्त , कुर्वाणः कर्म गर्हितम् । न पश्यति महापाप, न लज्जा न कुलक्रमम् ॥ ३२४ ॥ अन्यदा लोलतावाक्यैर्मेधविह्वलचेतसा । महाञ्च मारयामीति, मारितः पशुपालक ॥ ३२५ ॥ ततश्च तमजारक्ष, पशुभ्रान्त्या निपातितम् । निरीक्ष्य लोलतावुःसाध्यवेनेद विचिन्तितम् ॥ ३२६ ॥ लालिता रसना नून, मांसैर्नानाविधैर्मया । इद तु मानुष मांस, नैव दत्त कदाचन ॥ ३२७ ॥ ततोऽधुना ददामीदमस्यै पश्यामि यादृशः । अनेन जायते तोषो, रसनाया सुखावहः ॥ ३२८ ॥ तत सस्कृत्य तद्दत्त, तेन जाता प्रमोदिता । रसना लोलता तुष्टा, सोऽपि हर्षमुपागत ॥ ३२९ ॥ भूयश्च लोलतावाक्यैरपरापरमानुषान् । निहत्य भार्यया सार्ध, खादन् जात स राक्षसः ॥ ३३० ॥ ततो बालजनेनापि, निन्दितो बन्धुवर्जितः । लोकेन परिभूतश्च, स जात पापकर्मणा ॥ ३३१ ॥ अन्यदा लोलतायुक्तो, मनुष्याणां जिघांसया । प्रविष्टश्चौरवद्रात्रौ, गृहे शूरकुटुम्बिनः ॥ ३३२ ॥ ततः प्रसुप्त तत्सूनु, गृहीत्वा नि सरन् बहिः । स दृष्टस्तेन शूरेण, जडः कोपान्धचेतसा ॥ ३३३ ॥ ततः कलकलाराव, कुर्वता सह बान्धवै । तेनास्फोट्य नियद्धोऽसौ, मारितो यातनाशतैः ॥ ३३४ ॥ प्रभाते च स वृत्तान्तः, सजातः प्रकटो जने । तथापि किञ्चिच्छूरस्य, न कृत जडव-

-घुभिः ॥ ३३५ ॥ किं तर्हि ?, प्रत्युत वैश्चिन्तितं, यदुत—शूरेण विहित चारु, यदसौ कुलदूषणः । अस्माकं लाघवोत्पादी, जडः पापो निपातित ॥ ३३६ ॥ अमुं च जडवृत्तान्त, निरीक्ष्य स विचक्षण । ततश्च चिन्तयत्येव, निर्मलीमसमानसः ॥ ३३७ ॥ अये !— इह लोके जडस्येद, रसनालालने फलम् । सजात परलोके तु, दुर्गतिः सजनिष्यति ॥ ३३८ ॥ ततोऽत्यर्थं विरक्तोऽसौ, रसनालालन प्रति । स्थितो विचक्षणस्तावत्, यावत्तौ समुपागतौ ॥ ३३९ ॥ ततश्च—कथितायां विमर्शेन, मूलशुद्धौ सविस्तरम् । रसना त्यक्तुकामोऽसौ, पितरं प्रत्यभाषत ॥ ३४० ॥ तात ! दृष्टविपाकेयं, रसना साम्प्रत जडे । दुहिता दोषपुत्रस्य, रागकेसरिमन्त्रिण ॥ ३४१ ॥ तदेनामधुना दुष्टां, भार्यां दुष्टकुलोद्भवाम् । सर्वथा त्यक्तुमिच्छामि, तातात्र त्वदनुज्ञया ॥ ३४२ ॥ ततः शुभोदयेनोक्त, भार्येति प्रथिता जने । तवेय रसना तस्मान्नाकाण्डे त्यागमर्हति ॥ ३४३ ॥ अतः क्रमेण मोक्तव्या, त्वयेयं वत्स ! सर्वथा । तदत्र प्राप्तकाल ते, तदाकर्णय साम्प्रतम् ॥ ३४४ ॥ ये ते तुभ्य महात्मानो, विमर्शेन निवेदिताः । विवेकपर्वतारूढा, महामोहादिसूदनाः ॥ ३४५ ॥ तेषा मध्ये स्थितस्येयं, सदाचारेण तिष्ठतः । दुष्टापि रसना वत्स !, न ते किंचित्करिष्यति ॥ ३४६ ॥ तस्मादारुह्य यत्नेन, त विवेकमहागिरिम् । रसनादोषनिर्मुक्तस्तिष्ठ त्व सकुटुम्बक ॥ ३४७ ॥ ततो विचक्षणेनोक्त, तात ! दूरे स पर्वत । कथ कुटुम्बसहितस्तत्राह गन्तुमुत्सहे ? ॥ ३४८ ॥ शुभोदयोऽब्रवीद्वत्स !, न कार्यं भवता भयम् । विमर्शो यस्य ते बन्धुश्चिन्तामणिरिवातुल ॥ ३४९ ॥ यतोऽस्य विद्यते वत्स !, विमर्शस्य वराञ्जनम् । तद्बलाद्दर्शयत्येष, तमिहैव महागिरिम् ॥ ३५० ॥ प्रकर्षेणोदित तात !, सत्यमेतन्न सशयः । अनुभूत मयाऽप्यस्य, योगाञ्जनविजृम्भितम् ॥ ३५१ ॥ किं बहुना ?—यावदेष महावीर्य, न प्रयुङ्क्ते वराञ्जनम् । तावदेव न दृश्यन्ते, ते पर्वतपुरादयः ॥ ३५२ ॥ यदा तु विमलालोकमयं युङ्क्ते तदञ्जनम् । तदा सर्वत्र भासन्ते, ते पर्वतपुरादयः ॥ ३५३ ॥ ततो विचक्ष-

॥ ३१६ ॥ यया पुरद्वयं दृष्टं, यया दृष्टा महाटवी । विलोकितं यया स्थानं, महामोहादिभूभुजाम् ॥ ३१७ ॥ रसनामूलशुद्धिश्च, यया सम्यग्विनिश्चिता । यथेयं वर्तते पुत्री, रागकेसरिमन्त्रिणः ॥ ३१८ ॥ कुतूहलवशेनैव, भवचक्रं यया गतौ । निरीक्षितं च तत्सर्वं, नाना-वृत्तान्तसङ्कुलम् ॥ ३१९ ॥ यया दृष्टा महात्मानो, विवेकाख्यपर्वते । चारित्रधर्मराजस्य, यया स्थानं विलोकितम् ॥ ३२० ॥ यया दृष्ट स सन्तोषो, यश्च तेन विचेष्टितम् । यत्कारणमुद्दिश्य, भूरिकालोऽतिवाहितः ॥ ३२१ ॥ तदिदं तेन निःशेषं, विमर्शेन परिस्फुटम् । पुरो विचक्षणादीनां, विस्तरेण निवेदितम् ॥ ३२२ ॥ सप्तभिः कुलकम् । इतश्च मांसमद्याद्यैर्लोलयश्चासौ जडः । रसना लोलतावाक्यैर्न चेतयति किञ्चन ॥ ३२३ ॥ स तस्या लालने सक्तः, कुर्वाणः कर्म गर्हितम् । न पश्यति महापापं, न लज्जां न कुलक्रमम् ॥ ३२४ ॥ अन्यदा लोलतावाक्यैर्मद्यविह्वलचेतसा । महाजं मारयामीति, मारितः पशुपालकः ॥ ३२५ ॥ ततश्च तमजारक्षं, पशुभ्रान्त्या निपातितम् । निरीक्ष्य लोलतादुःखाद्बतेनैव विचिन्तितम् ॥ ३२६ ॥ लालिता रसना नूनं, मांसैर्नानाविधैर्मया । इदं तु मानुषं मांसं, नैव दत्तं कदाचन ॥ ३२७ ॥ ततोऽधुना ददामीदमस्यै पश्यामि यादृशः । अनेन जायते तोषो, रसनाया सुखावहः ॥ ३२८ ॥ ततः संस्कृत्य तद्दत्तं, तेन जाता प्रमोदिता । रसना लोलता तुष्टा, सोऽपि हर्षमुपागतः ॥ ३२९ ॥ भूयश्च लोलतावाक्यैरपरापरमानुषान् । निहत्य भार्यया सार्धं, खादन् जातः स राक्षसः ॥ ३३० ॥ ततो बालजनेनापि, निन्दितो बन्धुवर्जितः । लोकेन परिभूतश्च, स जातः पापकर्मणा ॥ ३३१ ॥ अन्यदा लोलतायुक्तो, मनुष्याणां जिघांसया । प्रविष्टश्चौरवद्रात्रौ, गृहे शूरकुटुम्बिनः ॥ ३३२ ॥ ततः प्रसुप्ते सत्सूनुं, गृहीत्वा निःसरन् बहिः । स दृष्टस्तेन शूरेण, जडः क्रोधान्धचेतसा ॥ ३३३ ॥ ततः कलकलारावं, कुर्वता सह बान्धवैः । तेनास्फोट्य निपत्योऽसौ, मारितो यातनाशतैः ॥ ३३४ ॥ प्रभाते च स वृत्तान्तः, सञ्जातः प्रकटो जने । तथापि किञ्चिच्छूरस्य, न कृतं जडस्व-

इशी मदीया प्रव्रज्येति । एवं च व्यवस्थिते—भार्यादोषेण यो नाम, प्रव्रज्यां समुपागतः । न च साऽपि परित्यक्ता, सर्वथा येन पापिनी ॥ ३६३ ॥ यत्र पाल्यतेऽद्यापि, कुटुम्बं तदवस्थितम् । तस्य मे कीदृशी नाम, प्रव्रज्या भूप ! कथ्यताम् ? ॥ ३६४ ॥ तथापि ते महाराज !, यन्ममोपरि गौरवम् । तर्कयन्नपि तत्राहं, न जाने तत्र कारणम् ॥ ३६५ ॥ यतः—सदोषेऽपि गुणारोपी, जगदाह्लादकारक । किमेषोऽचिन्त्यसौन्दर्यः, सज्जनप्रकृतेर्गुणः ॥ ३६६ ॥ तथाहि—नूनमेषा सतां दृष्टिरापवष्टिरपूर्विका । अकारणेऽपि या नित्यं, गुणारोपपरायणा ॥ ३६७ ॥ किंवा भुवनवन्द्यस्य, गुणोऽयं हतविद्विषः । अस्यैव जैनलिङ्गस्य, यत्रैते संस्थिता वयम् ॥ ३६८ ॥ तथाहि—सुरेन्द्रा अपि वन्दन्ते, त भक्तिभरपूरिताः । करस्थं यस्य पश्यन्ति, जैनेन्द्रं लिङ्गमञ्जसा ॥ ३६९ ॥ किं चान्यत्कारणं किञ्चिद्गुरुस्याचारधारक । येनेदृशोऽपि ते राजन्नहं दुष्करकारक ॥ ३७० ॥ एवं च वदति भगवति विगलितमदचेतसि विचक्षणसूरौ नरवाहनराजेन चिन्तितं—अहो निजचरितकथनेन भगवता जनितो मे मोहविलयः अहो भगवतो वचनविन्यासः अहो विवेकित्वं अहो मय्यनुग्रहपरता अहो दृष्टपरमार्थवेदिता, विज्ञातश्च मया सर्वस्यास्य भगवज्जल्पितस्य गर्भार्थः, ततोऽभिहितमनेन—भदन्त ! यादृक्ष लोके, सपत्न ते कुटुम्बकम् । अधन्यास्तादृशं नूनं, प्राप्नुवन्ति न मादृशाः ॥ ३७१ ॥ इदं च पोषयंस्त्र, जैनलिङ्गे च संस्थितः । भदन्त ! भगवानेव, गृहस्थो भवसीदृशः ॥ ३७२ ॥ अन्यच्च—कृताऽकिञ्चित्करी येन, रसनाऽपि महात्मना । अत्यन्तदुर्जया लोके, लोल्या च निराकृता ॥ ३७३ ॥ महामोहादिवर्गं च, जित्वा यो जैनसत्पुरे । स्थितोऽसि साधुमध्यस्थः, कुटुम्बसहितो मुने ! ॥ ३७४ ॥ स चेत्त्वं न भवसत्र, हन्त दुष्करकारक । कीदृशास्ते भवन्त्यन्ये, ब्रूहि दुष्करकारका ? ॥ ३७५ ॥ यश्चाय तव सपत्नो, वृत्तान्तो जगदद्भुतः । एतद्वृत्तान्तयुक्ता ये, ते धन्याः प्रतिभान्ति मे ॥ ३७६ ॥ तद्भदन्त ! किमेतेषां, साधूनामयमीदृशः । सपत्न एव वृत्तान्तः, किंवा नेति

मेनोक्ते, विमर्शो भद्र! पीयताम्। मम तदत्र न सूर्णं, यथास्ति तव तादृशम् ॥ ३५४ ॥ ततोऽनुग्रहबुद्ध्यैव, सादरं प्रतिपादितम्। विचक्षणाय निःशेषं, विमर्शेन तदञ्जनम् ॥ ३५५ ॥ ततस्तदुपयोगेन, क्षणादेव पुरःस्थितम्। विचक्षणेन यद्दृष्टं, तदिदानीं निबोधत ॥ ३५६ ॥ यत्तल्लोकसमाकीर्णं, पुरं सात्त्विकमानसम्। यत्रासौ विमलस्तुङ्गो, विवेको नाम पर्वतः ॥ ३५७ ॥ यच्च तच्छिखरं रम्यमप्रमत्तत्वनामकम्। यत्रोपरिष्टात्तस्यैव, निविष्टं जैनसत्पुरम् ॥ ३५८ ॥ ये च लोका महात्मानः, साधवस्तन्निवासिनः। यत्र चित्तसमाधानो, मण्डपस्तत्र मण्डपः ॥ ३५९ ॥ या च निःस्पृहता नाम, वेदिका तत्र संस्थिता। तस्याश्चोपरि यच्चारु, जीववीर्यं महासनम् ॥ ३६० ॥ चारित्रधर्मराजश्च, परिवारविवेष्टितः। ये च तस्य गुणाः शुभ्रा, ये च सेवा महीभुजाम् ॥ ३६१ ॥ तदिदं भो महाराज!, तदानीं नरवाहन!। विचक्षणेन निःशेषं, साक्षादेवावलोकितम् ॥३६२॥ पञ्चभिः कुलकम्। ततश्च भो भो महानरेन्द्र नरवाहन! स विचक्षणः सदैव तेन शुभोदयेन पित्रा युक्त एव तया निजचारुतया मात्रा आलिङ्गित एव तया प्रियभार्यया बुद्ध्या सहित एव तेन भ्रात्रा विमर्शेन अन्वित एव वक्षःस्थलशायिना तेन प्रकर्षेण प्रियतमतनयेन समुपेत एव वदनकोटरवने वर्तमानया रसनाभार्यया सर्वथा सकुटुम्बक एव केवलं तामेकां लोलतां दासचेटीं परित्यज्य निराकृत्य च परोपक्रियया सम्प्राप्य गुणधरनामानमाचार्यं प्रव्रजितः, तेन स्थितस्तेषां जैनपुरनिवासिनां भगवतां साधूनां मध्ये किलाहं प्रव्रजित इति मन्यमानः, तत शिक्षितः समस्तोऽपि तेन तेषामाचारो निषेवितः परमभक्त्या विसर्जिता सा रसना सर्वथा विहिताऽसमञ्जसमकिञ्चित्करी, ततः स्थापितस्तेन गुरुणा निजपदे स विचक्षणः, स चान्यत्रापि दृश्यमान परमार्थतस्तत्रैव विवेकगिरिशिखरवासिनि जैनपुरे द्रष्टव्य। यतो भो महाराज नरवाहन! स विचक्षणोऽहमेव विज्ञेयः, एते च ते महात्मानः साधवो मन्तव्याः, ततो महाराज! यदूचिरेऽम्यधायि यदुत—किं ते वैराग्यकारणमिति तदिदं मम वैराग्यकारणं, इय चे-

पूर्वजैः । विशेषतो गृहायातः, साम्प्रतं मानमर्हति ॥ ४३३ ॥ अहं तु शैलराजेन, विधुरीकृतचेतनः । आध्मातस्तब्धसर्वाङ्गस्तानामापे
तवेदृशम् ॥ ४३४ ॥ यदुत—अरे विमूढा ! को नाम, तपनोऽस्य ममाग्रतः ? । येनास्य पूजनं कुर्यामहं न पुनरेष मे ॥ ४३५ ॥ तदा
कर्ण्य मन्त्रिमहत्तमैरुक्तं—देव ! मा मैवं वदतु देवः, अस्य हि पूजनमकुर्वता देवेन लङ्घितः पूर्वपुरुषक्रमः परित्यक्ता राजनीतिः प्रलयं
नीताः प्रकृतयः समुन्मूलितं राज्यसुखं परिहापितो विनयः अपकर्णितमसद्वचनं भवति, तदेव भवितुमर्हति देवः, क्रियतामस्माकमनुरोधेन
तपनराजस्याभ्युद्गमनं देवेनेति वदन्तः पतिताः सर्वेऽपि मम चरणयोः, ततो मृदूभूतो मनाङ् मे शैलराजीयहृदयावलेपनावष्टम्भः, केवलं
संक्षिप्तोऽस्मि मृषावादेन, ततो मयाऽभिहितं—न ममात्र क्षणे चित्तोत्साहः तत्पृच्छत यूयं कुरुत यथोचितं अहं तु पश्चादागमिष्यामि,
तत्रास्थाने राजनि प्रवेक्ष्यामीति। ततो यदाज्ञापयति देव इति वदन्तो निर्गतास्तपनाभिमुखं मन्त्रिमहत्तमा राजलोकश्च, सन्ति च तस्य तप-
ननृपतेर्विविधदेशभाषावेषवर्णस्वरभेदविज्ञानान्वधानविज्ञातारो बहवश्चरविशेषाः, ततः केनचिच्चरेण विदितोऽयं वृत्तान्तो निवेदितस्तप-
नाय । इतश्च मन्त्रिमहत्तमैर्विहिता तपनराजस्य प्रतिपत्तिरुपस्थापितानि महार्हप्राभृतानि समावर्जित इव दृष्ट आस्थाने तपननरेन्द्रेण,
पृष्टा रिपुदारणवार्ता, मन्त्रिमहत्तमैरुक्तं—देव ! देवपादप्रसादेन कुशली रिपुदारणः, समागच्छति चैष देवपादमूलमिति । ततो दत्ता म
माज्ञायकाः, विजृम्भितौ शैलराजमृषावादौ, ततस्ते मयाऽभिहिताः यदुत—अरे वदत तान् गत्वा, सर्वान्मन्त्रिमहत्तमान् । यथा—
केनात्र प्रहिता यूयं, दुरात्मानो नराधमाः ॥ ४३६ ॥ ततो मया नागन्तव्यमेव, तूर्णमागच्छत यूयं, इतरथा नास्ति भवतां जीवि-
तमिति । तदाकर्ण्य गतास्तत्समीपमाज्ञायकाः, निवेदितं मन्त्रिमहत्तमानां मदीयवचनं, ततस्ते तत्रास्थाने सर्वे लोकाः सत्रासाः सोद्वेगा
नष्टजीविताशाः परस्पराभिमुखमीक्षमाणा अहो रिपुदारणस्य मर्यादेति चिन्तयन्तः किमधुना कर्तव्यमिति विमूढाः सर्वेऽपि मदीयम

द्वे भार्ये, वरतावर्यते किल ॥ ४१४ ॥ मृदुतासत्यते नाम, तस्य द्वे कन्यके शुभे । विद्येते भुवनानन्दकारिके चारुदर्शने ॥ ४१५ ॥
सामास्मृतरूपे ते, ते सर्वसुखदायिके । अत्यन्तदुर्लभे भूप!, मृदुतासत्यते जनैः ॥ ४१६ ॥ एवं च स्थिते—कदाचिदेव ते कन्ये, ल-
भ्यते रिपुदारणः । तल्लाभे च वयस्याभ्यामाभ्यामेव वियोक्ष्यते ॥ ४१७ ॥ यतः—गुणसन्दोहभूते ते, तथेमौ दोषपुञ्जकौ । तस्मा-
त्ताभ्यां सहावस्था, नानयोर्भूप! पापयोः ॥ ४१८ ॥ ततः प्रयोजनस्यास्य, कश्चिदन्यो विचिन्तकः । यत्तु तेऽभिमत भूप!, तदेवाचर
साम्प्रतम् ॥ ४१९ ॥ तच्छ्रुत्वाचिन्तयद्राजा, स तदा नरवाहनः । अहो कष्टमहो कष्टं, सूनोर्मम तपस्विनः ॥ ४२० ॥ यस्येदृशौ रिपू
मित्र, पार्श्वस्थौ दुःखदायिनौ । अहो वराको नैवासौ, यथार्थो रिपुदारणः ॥ ४२१ ॥ ततः किं क्रियतामत्र?, नैवास्त्यस्य प्रतिक्रिया ।
तज्ज्ञोऽधुनाहं तत्करोमि हितमात्मने ॥ ४२२ ॥ ततोऽभिषिच्य मां राज्ये, कृत्वा सर्वं यथोचितम् । विचक्षणगुरो पार्श्वे, निष्क्रान्तो
नरवाहनः ॥ ४२३ ॥ ततश्च—विवेकशिखरस्थोऽपि, स विचक्षणसूरिणा । सार्धं ग्रामेषु देशेषु, विजहार महामतिः ॥ ४२४ ॥ ममापि
राज्ये सप्रभे, लब्धावसरसौख्यौ । शैलराजमृषावादौ, नितरामभिवर्धितौ ॥ ४२५ ॥ तृणतुल्यं जगत्सर्वं, पश्यामि सुतरां ततः । जलग-
र्भूपसकाशमनृतं प्रतिभाति मे ॥ ४२६ ॥ एवं च—शिष्टैरुत्रास्यमानस्य, निन्द्यमानस्य पण्डितैः । दुष्टस्य भूरिवचनैरलीकैश्चादुकर्मभिः
॥ ४२७ ॥ पुण्योदयस्य माहात्म्याद्राज्यं पालयतो मम । गतानि कतिचिद्भद्रे!, वर्षाणि किल लीलया ॥ ४२८ ॥ इतश्चोभयतापाक्ष ,
सार्वभौमो द्विषत्तपः । चक्रवर्ती तदा लोके, तपनो नाम भूपतिः ॥ ४२९ ॥ स सर्वबलसामग्र्या, महीपर्यन्तलीलया । भ्रमंस्तत्र समा-
यातः, पुरे सिद्धार्थनामके ॥ ४३० ॥ ततो विदितवृत्तान्तैरहं मन्त्रिमहत्तमैः । हितकारितया प्रोक्तो, विज्ञातनृपनीतिभिः ॥ ४३१ ॥ य-
दुत—चक्रवर्ती जगज्ज्येष्ठस्तपनोऽयं महीपतिः । तदस्य क्रियतां देव!, गत्वा सन्मानपूजनम् ॥ ४३२ ॥ पूज्योऽयं सर्वभूपानामर्चितस्तव

पूर्वजैः । विशेषतो गृहायातः, साम्प्रतं मानमर्हति ॥ ४३३ ॥ अहं तु शैलराजेन, विधुरीकृतचेतनः । आध्मातस्तब्धसर्वाङ्गस्तानाभाषे सदेदृशम् ॥ ४३४ ॥ यदुत—अरे विमूढाः! को नाम, तपनोऽयं ममाग्रतः ? । येनास्य पूजनं कुर्यामहं न पुनरेष मे ॥ ४३५ ॥ तदाकर्ण्य मतिमहत्तमैरुक्तं—देव! मा मैवं वदतु देवः, अस्य हि पूजनमकुर्वता देवेन लङ्घितं पूर्वपुरुषक्रमं परित्यक्ता राजनीतिः प्रलयं नीताः प्रकृतयः समुज्झितं राज्यसुखं परिहापितो विनयः अपकर्णितमस्मद्वचनं भवति, तदेवं भवितुमर्हति देवः, क्रियतामस्माकमनुरोधेन तपनराजस्याभ्युद्गमनं देवेनेति वदन्तः पतिताः सर्वेऽपि मम चरणयोः, ततो मृदूभूतो मनाङ् मे शैलराजीयहृदयावलेपनावष्टम्भः, केवलं सचिवोऽत्र मृषावादेन, ततो मयाऽभिहितं—न ममात्र क्षणे चित्तोत्साहः तद्गच्छत यूयं कुरुत यथोचितं अहं तु पश्चादागमिष्यामि, दत्तास्थाने राजनि प्रवेक्ष्यामीति। ततो यदाज्ञापयति देव इति वदन्तो निर्गतास्तपनाभिमुखं मतिमहत्तमा राजलोकश्च, सन्ति च तस्य तपननृपतेर्विविधदेशभाषावेषवर्णस्वरभेदविज्ञानान्तर्धानविद्याधारो महत्तमचरविशेषाः, ततः केनचिच्चरेण विदितोऽयं वृत्तान्तो निवेदितस्तपनाय । इतश्च मतिमहत्तमैर्विहिता तपनराजस्य प्रतिपत्तिरुपस्थापितानि महार्घप्राभृतानि समावर्जितं हृदयं दत्तं चास्थानं तपननरेन्द्रेण, पृष्टा रिपुदारणवार्ता, मतिमहत्तमैरुक्तं—देव! देवपादप्रसादेन कुशली रिपुदारणः, समागच्छति चैष देवपादमूलमिति । ततो दत्ता म माहायकाः, विजृम्भितौ शैलराजमृषावादौ, ततस्ते मयाऽभिहिताः यदुत—अरे भदत तान् गत्वा, सर्वान्मतिमहत्तमान् । यथा—केनात्र प्रहिता यूयं, दुरात्मानो नराधमाः ॥ ४३६ ॥ ततो मया नागन्तव्यमेव, तूर्णमागच्छत यूयं, इतरथा नास्ति भवतां जीवितमिति । तदाकर्ण्य गतास्तत्समीपमाहायकाः, निवेदितं मतिमहत्तमानां मदीयवचनं, ततस्ते तत्रास्थाने सर्वे लोका सत्रासा सोद्वेगा नष्टजीविताशाः परस्पराभिमुखमीक्षमाणा अहो रिपुदारणस्य मर्यादेति चिन्तयन्तः किमधुना कर्तव्यमिति विमूढाः सर्वेऽपि मदीयम-

द्वे भार्ये, वरतावर्तेते किल ॥ ४१४ ॥ मृदुतासत्यते नाम, तस्य द्वे कन्यके शुभे । विद्येते भुवनानन्दकारिके चारुदर्शने ॥ ४१५ ॥ साक्षादमृतरूपे ते, ते सर्वसुखदायिके । अत्यन्तदुर्लभे भूप!, मृदुतासत्यते जनैः ॥ ४१६ ॥ एवं च स्थिते—कदाचिदेव ते कन्ये, लप्स्येते रिपुदारणः । तदासौ च वयस्याभ्यामाभ्यामेव वियोक्ष्यते ॥ ४१७ ॥ यतः—गुणसन्दोहभूते ते, तयेमौ दोषपुञ्जकौ । तस्मात्ताभ्यां सहावस्था, नानयोर्भूप! पापयोः ॥ ४१८ ॥ तदा प्रयोजनस्यास्य, कश्चिदन्यो विचिन्तकः । यत्तु तेऽभिमतं भूप!, तदेवाचर साम्प्रतम् ॥ ४१९ ॥ तच्छ्रुत्वाचिन्तयद्राजा, स तदा नरवाहनः । अहो कष्टमहो कष्टं, सूनोर्मम तपस्विनः ॥ ४२० ॥ यस्येदृशौ रिपू मित्र, पार्श्वस्थौ दुःखदायिनौ । अहो वराको नैवासौ, यथार्थो रिपुदारणः ॥ ४२१ ॥ ततः किं क्रियतामत्र?, नैवास्त्यस्य प्रतिक्रिया । तच्छ्रेयोऽधुनाऽहं तत्करोमि हितमात्मने ॥ ४२२ ॥ ततोऽभिषिच्य मां राज्ये, कृत्वा सर्वं यथोचितम् । विचक्षणगुरोः पार्श्वे, निष्क्रान्तो नरवाहनः ॥ ४२३ ॥ ततश्च—विवेकशिखरस्थोऽपि, स विचक्षणसूरिणा । सार्धं बाह्येषु देशेषु, विजहार महामतिः ॥ ४२४ ॥ ममापि राज्ये सम्पन्ने, लब्धावसरसौख्यौ । शैलराजमृषावादौ, नितरामभिवर्धितौ ॥ ४२५ ॥ तृणतुल्यं जगत्सर्वं, पश्यामि सुतरां तत । जल्प-भूपसकाशमनृतं प्रतिभाति मे ॥ ४२६ ॥ एवं च—स्तिमितस्थास्यमानस्य, निन्द्यमानस्य पण्डितैः । दुष्टस्य भूरिपापैरलीकैश्चाटुकर्मभिः ॥ ४२७ ॥ पुण्योदयस्य माहात्म्याद्राज्यं पालयतो मम । गतानि कतिचिन्नृदे!, वर्षाणि किल लीलया ॥ ४२८ ॥ इतश्चोग्रप्रतापाढ्यः, सार्वभौमो द्विषत्तपः । चक्रवर्ती तदा लोके, तपनो नाम भूपतिः ॥ ४२९ ॥ स सर्वबलसामग्र्या, महीदर्शनलीलया । भ्रमंस्तत्र समायातः, पुरे सिद्धार्थनामके ॥ ४३० ॥ ततो विदितवृत्तान्तैरुक्तं मन्त्रिमहत्तमैः । हितकारितया प्रोक्तो, विज्ञातनृपनीतिभिः ॥ ४३१ ॥ यदुत—चक्रवर्ती जगज्ज्येष्ठस्तपनोऽयं महीपतिः । तदस्य क्रियतां देव!, गत्वा सन्मानपूजनम् ॥ ४३२ ॥ पूज्योऽयं सर्वभूपानामधिपस्तव

द्वे भार्ये, वरतावर्यते किल ॥ ४१४ ॥ मृदुतासत्यते नाम, तस्य द्वे कन्यके शुभे । विद्येते भुवनानन्दकारिके चारुदर्शने ॥ ४१५ ॥ साक्षादमृतरूपे ते, ते सर्वसुखदायिके । अत्यन्तदुर्लभे भूप!, मृदुतासत्यते जने ॥ ४१६ ॥ एवं च स्थिते—कदाचिदेव ते कन्ये, छप्स्यते रिपुदारणः । तल्लाभे च वयस्याभ्यामाभ्यामेष वियोक्ष्यते ॥ ४१७ ॥ यतः—गुणसन्दोहभूते ते, तथेमौ दोषपुञ्जकौ । तस्मात्ताभ्यां सहावस्था, नानयोर्भूप! पापयोः ॥ ४१८ ॥ ततः प्रयोजनस्यास्य, कश्चिदन्यो विचिन्तकः । यत्तु तेऽभिमतं भूप!, तदेवाचर साम्प्रतम् ॥ ४१९ ॥ तच्छ्रुत्वाचिन्तयद्राजा, स तदा नरवाहनः । अहो कष्टमहो कष्टं, सूनोर्मम तपस्विनः ॥ ४२० ॥ यस्येदृशौ रिपू नित्यं, पार्श्वस्थौ दुःखदायिनौ । अहो वराको नैवासौ, यथार्थो रिपुदारणः ॥ ४२१ ॥ ततः किं क्रियतामत्र?, नैवास्त्यस्य प्रतिक्रिया । त्यक्तसङ्गोऽधुनाऽहं तत्करोमि हितमात्मने ॥ ४२२ ॥ ततोऽभिषिच्य मां राज्ये, कृत्वा सर्वं यथोचितम् । विचक्षणगुरोः पार्श्वे, निष्क्रान्तो नरवाहनः ॥ ४२३ ॥ ततश्च—विवेकशिखरस्थोऽपि, स विचक्षणसूरिणा । सार्धं चान्येषु देशेषु, विजहार महामतिः ॥ ४२४ ॥ ममापि राज्ये सम्पन्ने, लब्धावसरसौख्यौ । शैलराजमृषावादौ, नितरामभिवर्धितौ ॥ ४२५ ॥ तृणतुल्यं जगत्सर्वं, पश्यामि सुतरां ततः । अलग-ण्डूपसकाशमनृतं प्रतिभाति मे ॥ ४२६ ॥ एवं च—खिन्नैरत्यास्यमानस्य, निन्द्यमानस्य पण्डितैः । तुष्टस्य मूर्खजनैरलीकैश्चाटुकर्मभिः ॥ ४२७ ॥ पुण्योदयस्य माहात्म्याद्राज्यं पालयतो मम । गतानि कतिचिद्भद्रे!, वर्षाणि किल लीलया ॥ ४२८ ॥ इतश्चोग्रप्रतापाढ्यः, सार्वभौमो द्विषत्तपः । चक्रवर्ती वरो लोके, तपनो नाम भूपतिः ॥ ४२९ ॥ स सर्वबलसामग्र्या, महीदर्शनलीलया । भ्रमंस्तत्र समायातः, पुरे सिद्धार्थनामके ॥ ४३० ॥ ततो विविधवस्त्राद्यैरहं मणिमहत्तमैः । हितकारितया प्रोक्तो, विज्ञातनृपनीतिभिः ॥ ४३१ ॥ यदुत—चक्रवर्ती जगज्ज्येष्ठस्तपनोऽयं महीपतिः । तदस्य क्रियतां देव!, गत्वा सन्मानपूजनम् ॥ ४३२ ॥ पूज्योऽयं सर्वभूपानामर्चितस्तव

पूर्वजैः । विक्षेपतो गृहायाता, साम्प्रतं मानमर्हति ॥ ४३३ ॥ अहं तु शैलराजेन, विधुरीकृतचेतनः । आध्मातस्तब्धसर्वाङ्गस्तानाभाषे तदेदृशम् ॥ ४३४ ॥ यदुत—अरे विमूढाः! को नाम, तपनोऽयं ममाग्रतः ? । येनास्य पूजनं कुर्यामहं न पुनरेष मे ॥ ४३५ ॥ तदाकर्ण्य मतिमहत्तमेनोक्तं—देव! मा मैवं वदतु देवः, अस्य हि पूजनमकुर्वता देवेन लङ्घितः पूर्वपुरुषक्रमः परित्यक्ता राजनीतिः प्रकोप्य नीताः प्रकृतयः समुच्छिन्नं राज्यसुखं परिहापितो विनयः अपकर्णितमस्मद्वचनं भवति, तन्नैव वक्तुमर्हति देवः, क्रियतामस्माकमनुरोधेन तपनराजस्याभ्युद्गमनं देवेनेति वदन्तः पतिताः सर्वेऽपि मम चरणयोः, ततो मृदूभूतो मनाङ् मे शैलराजीयहृदयावलेपनावष्टम्भः, केवलं सन्निहितोऽसौ मृषावादेन, ततो मयाऽभिहितं—न ममात्र क्षणे चित्तोत्साहः तद्गच्छत यूयं कुरुत यथोचितं अहं तु पश्चादागमिष्यामि, तदास्थाने राजनि प्रवेक्ष्यामीति। ततो यदाज्ञापयति देव इति वदन्तो निर्गतास्तपनाभिमुखं मतिमहत्तमा राजलोकश्च, सन्ति च तस्य तपननृपतेर्विविधदेशभाषावेषधर्मस्वरभेदविज्ञानान्वर्थानविज्ञातारो बहवश्चरविशेषाः, ततः केनचिच्चरेण विदितोऽयं वृत्तान्तो निवेदितस्तपनाय । इतश्च मतिमहत्तमैर्विहिता तपनराजस्य प्रतिपत्तिरुपस्थापितानि महार्हप्राभृतानि समावर्जितं हृदयं दत्तं चास्थानं तपननरेन्द्रेण, पृष्टा रिपुदारणवार्त्ता, मतिमहत्तमेनोक्तं—देव! देवपादप्रसादेन कुशली रिपुदारणः, समागच्छति चैष देवपादमूलमिति । ततो दत्ता ममाह्वायकाः, विजृम्भितौ शैलराजमृषावादौ, ततस्ते मयाऽभिहिताः यदुत—अरे वदत तान् गत्वा, सर्वान्मतिमहत्तमान् । यथा—केनात्र महिता यूयं, दुरात्मानो नराधमाः ॥ ४३६ ॥ ततो मया नागन्तव्यमेव, तूर्णमागच्छत यूयं, इतरथा नास्ति भवतां जीवितमिति । तदाकर्ण्य गतास्तत्समीपमाह्वायकाः, निवेदितं मतिमहत्तमानां मदीयवचनं, ततस्ते तत्रास्थाने सर्वे लोकाः सत्रासाः सोद्वेगा नष्टजीविताशाः परस्पराभिमुखमीक्षमाणा अहो रिपुदारणस्य मर्यादेति चिन्तयन्तः किमधुना कर्तव्यमिति विमूढाः सर्वेऽपि मदीयम-

एवं तावत् शिथिलाचारचरित-मुत्कीर्त्तितम्, अथ सुविहितात्ममानिना मध्यस्थात्मज्ञानिना च निश्चयनयेनासुविहितानामाचरित दर्शयितुमाह—

नियगुरुकमरागेण व दक्खिन्नओ वा, समइअभिनिवेसेणधमधीइ केई ।
सुविहियवहुमाणी होउ मज्झत्थनाणी, इय कुसुयकुबुद्ध विंति आणाविरुद्ध ॥ २० ॥

व्याख्या—केचिद् मध्यस्थात्मज्ञानिन सुविहितबहुमानिनश्चाज्ञाविरुद्ध ब्रुवत इति योगः, कुतः पुन-र्मध्यस्थात्मज्ञानिन इत्यत्र हेतुचतुष्टयमाह—'निजगुरुक्रमरागेण' स्वकीयपूर्वजसमाचारपक्षपातेन, ते हि मध्यस्थमानिन आसन्निति ॥१॥ अन्येषामपरेषा श्राद्धादीना 'दाक्षिण्यम्' उपरोधः ततो वेति, वाशब्दो विकल्पार्थः, तेषा हि मध्यस्थभाव एव रोचते ॥ २ ॥ स्वमते आत्मबुद्धेरभिनिवेश आग्रहो यदुत माध्यस्थ्यमेव श्रेय इति चेतोऽवष्टम्भः ॥३॥ 'अन्धमधीइत्ति' प्राकृतत्वाद् अन्धान्धीन्यायो प्राग्नो यथैकस्यान्धस्यापरोऽन्धो लग्नस्तस्यापि अन्य इत्येवमाद्यस्यैव सर्वथा मार्गादर्शित्वादन्येषामपि मार्गास्पर्शित्वमेव, एवमाद्यस्यैव गुरोर्माध्यस्थ्यावलम्बनस्यासमीचीनत्वाद् शेषाणामपि तद् तथैव, ॥ ४ ॥ एवं हेतुचतुष्टयात् केचिन्मुग्धबुद्धयो मध्यस्थज्ञानिनः सवृत्ताः, भवन्तु केचित् साधवः सदाचारा अपरे तु अतादृशास्तथापि अस्माक सर्वेषु समताभावो माध्यस्थ्य, तया च मध्यस्थ मध्यस्थताविषयं ज्ञान विद्यते येषा ते मध्यस्थज्ञानिनः, आत्मान मध्यस्थ मन्यमाना इत्यर्थः। कीदृशाः सन्तः? इत्याह—'सुविहित' सुसयतमात्मान बहु मन्यन्त इति सुविहितबहुमानिनः, मध्यस्थज्ञानिनामयमभिप्रायो—यदुत गुणागुणवि-

व्याख्या–'सततं' सर्वदा 'इह' जगति, जीवानां किमित्याह–'शोक' पुत्रादिवियोगजनितो दु:खविशेषो, 'दौर्गत्य' दारिद्र्य 'व्याधयो' ज्वरादिरोगाः, 'जरा' वयोहानिः, दीर्घत्वह्रस्वत्वे प्राकृतत्वात्, 'मरण' पञ्चत्वप्राप्ति', 'भयम्' अनेकविधत्रास', आदिशब्दात् क्रोधादिग्रहः, एते किमित्याह–'वैरिणो' अन्तरङ्गसम्यक्त्वादिप्राणापहारित्वात् प्रौढशत्रवो, 'दुर्निवारा' उपक्रमशतैरपि निषेद्धुमशक्या अवश्यमपायहेतव इति भावः, तथा चैतैरुपहतेषु सर्वजीवेषु यदि कथंचित् 'क्षयकर' ध्वसविधानदक्ष–मेषां शोकादीनामन्तरङ्गशत्रूणा कश्चिद् भव्यत्वपरिपाकवानपि अत्यन्तमेतद् भीरु–रन्तरङ्गसम्यक्त्वादिप्राणान् रिरक्षिषु, 'कांक्षेत्' अभिलषेत् तथाविधमहाबलिष्ठराजानमिव, 'तत्त्व' सद्गुरूपदिष्टं विधिधर्ममार्गलक्षण रहस्यम् अवश्यमेतस्मात् ममान्तरङ्गप्राणरक्षा भविष्यतीति अभिप्रायवान्, 'तथापि' एवमपि कस्मिंश्चिद् भव्यविशेषे तत्त्वाकाङ्क्षिण्यपि किमित्याह –'कुपथदर्शिनो' दिवा रात्रौ वा शुचिभूतेनान्यथा वा देवस्नानपूजादिक विधेय, पात्रापात्रविभागेन शुद्धाशुद्धभैक्षाविशेषेण यतिभ्यो दान विधेय, सदाचारे इतरस्मिन् वा लिङ्गमात्रधारिणि वन्दनादिक मोक्षबीज, सुविहितान्तिके सम्यक्त्वाद्यारोपण न कार्यं, गद्दिकाद्यासनेऽपि चैत्ये न दोष इत्यादिकुत्सितमार्गप्रकाशकाः तस्य संघटिताः, के इत्याह, 'कुलिङ्गिन',' सदाचारविकलकुत्सितलिङ्गमात्रधारिणः तैश्च एवविधो मार्गो दर्शितः, तत कथ तस्यान्तरङ्गवैरिक्षयो भवतु इति। एवमसमंजसदर्शने प्रकरणकारः सखेदमाह–'हीति' खेदेऽव्यय, महदिद खेदस्थान यद् भव्यस्य कस्यापि अन्तरङ्गवैरिक्षयार्थिनस्तसुदृष्टिकारमार्गदर्शन विषविकारनिःस्पर्धिनः पीयूषपानमभिलषत कालकूटपानमिवेद–मिति वृत्तार्थः ॥ १९ ॥

...यदि हि ते विदितश्रुततत्त्वा अभविष्यन्, तदा ...घा तपामभविष्यत्, अत एव च 'साधुधर्मे' आगमाचरणाविशेषप्रतिष्ठितानुष्ठान- ..., एक तावन्निद्राविकथाकषायविषयासक्तत्वेन, अपरे तु मिथ्याभिनिवेशवशात् स्वकल्पितक्रियानुरागेण, ... गुरुकुल' सद्गुरुजनाधिष्ठितसुसाधुसमूहस्तस्य 'क्रमो' दशविधचक्रवालसामाचारीप्रभृतिकः समाचारः तेन 'त्यक्ता' वर्जिता, उभयेऽपि प्रमत्तत्वोक्तहेतुद्वयादेव, तथा 'सङ्क्लेशे' क्रूरतया वि(चि)त्तविप्लवे 'प्रसक्ताः' अत्यन्तप्रतिबद्धाः, एके तावत् सुविहितवि-द्वेषेणक्रियापरिहारानुचिन्तनेन च, अपरे तु स्वकल्पितक्रियाभिनिवेशेनेति, 'अहहेति' खेदे, कथं केन प्रकारेण प्रचण्डदशमाश्च-र्यमाहात्म्यादिना, किमित्याह—पात्राणि सद्गुणमहामाणिक्यकरण्डकाः तद्विपरीतानि तु न पात्राणि अपात्राणि सर्वथा विशुद्ध-संयमरत्नानाधारा एवासाधवः, पुंल्लिंगता प्राकृतत्वात्, 'च' समुच्चये, एवोऽवधारणे, स च योजित एव, 'ही' इत्यपि खेद एव, 'ख्यातिं' सुसाधुतया प्रसिद्धिं, 'प्राप्ता' लब्धवन्तः, अहहेति (अहहहीति) खेदवाचिपदद्वयोपादानमत्यन्तखेदप्रतिपादनार्थं, महत्कष्टस्थानमेतद् यदेवंविधास्तिरस्कारयोग्या अपि शुद्धसाधुमार्गप्रतिकूलचारित्वेन सुसाधुकीर्तिमाप्नुवन्तीति वृत्तार्थः ॥२२॥

अथ पूर्वोक्तस्वरूपे कुगुरावपि सुगुरुप्रतिपत्तिं कुर्वतां श्रावकाणां स्वरूपमाह—

कुगुरुवयणदूढा ससयावत्तछूढा, अइबहुभवरूढातुच्छमिच्छत्तमूढा ।

भागे हि क्रियमाणे निर्गुणस्य परिहारे तस्य महान् संताप आपादितो भवति, स च संसारवृद्धये, सर्वभक्तिविधाने तु गुणिनामपि भक्तिविधानादयद्दय संसारोच्छेद इति । अथ चायुक्तः तेषामभिप्रायो, यत पूर्वाचार्यैः पार्श्वस्थादीना दर्शनस्यापि निषेधनाष्टादशशीलाङ्गसहस्रधारिणामेव वन्दनादिप्रतिपत्तिरभ्यधायि, नाविशेषेण, एवंविधमध्यस्थतायाः तु उपहास्यत्वात्, तदुक्तम्–"धीमद्भिः मविचार्यकार्यमखिलं यस्त्वैहिकामुष्मिकम्, ज्ञात्वा दोषगुणांश्च दोषविमुखैः कार्यो गुणेष्वादरः । एव दाष्ट्युतिर्भयत्यपरथा समूर्च्छिममायता, पीयूष च विष च तुल्यमवता का नाम मध्यस्थता ॥ १ ॥" तस्मादनादरणीया एवंविधमध्यस्थता, ते तु एव मध्यस्थज्ञानिनो भूत्वा सपद्य, अनुस्वारलोपः प्राकृतत्वात्, किं कुर्वन्तीत्याह, इति वक्ष्यमाणप्रकारेण 'आज्ञा' आप्तोपदेशस्तया 'विरुद्ध' विरोधभाक्, 'भणते' भाषन्ते, अत एव तत् कुत्सितम् असम्यक्, श्रुतमाकर्णितं कुश्रुत, सुश्रुतमपि या कुत्सितमसम्यग् बुद्धमवगत कुबुद्ध, तथा च कुश्रुत च कुबुद्ध चेति द्वन्द्वः, न हि सुश्रुतस्य पापाज्ञाविरुद्धत्वं कदाचिदपीति भाव इति ...

विहारोष्णोदकपानसार्धहस्तत्रितयमानकल्पधारणपटलकधारणपात्रमात्रकातिरिक्तोपधिवर्जनादिलक्षणा, तस्याः 'चारित्रसज्ञा' विशुद्धसयमनाम ये ते तथा, पुनः कीदृशा 'सूत्रोत्तीर्णबोधाः' श्रुतोपदेशातिक्रान्तपदार्थज्ञाना, न हि सूत्रे कश्चिदपि स्वय प्रकल्पितसामाचार्याः चारित्रत्वमुक्त, तथा 'मुषितजलजनौघाः' डलयोरेकत्वमिति लक्षणात् जला जडा मूर्खा इत्यर्थ, ततश्च मुषिता वसन–पान–भोजनाद्यादानेन तस्करैरिव लुण्टिता 'जडजनौघा' मूर्खलोकसमूहा यैस्ते तथा, ईदृशाश्च सन्त ते किं यदतीत्याह–'वयमिह चरणाढ्या' वयमित्यात्मनिर्देशे तदपि सावधारण द्रष्टव्य, यदाह–नान्य इति नापरेऽपि केचित् इह प्रवचने चरणाढ्याः सशुद्धसयमसंयुक्ताः, 'हते'ति विषादे, एव च ब्रुवाणास्ते 'परेषां' शेषसाधूना 'परिभव'तिरस्कारम् ,आत्मनस्तु 'उत्कर्ष' सर्वोत्कृष्टत्वमुल्लासयन्ति जने विस्फारयन्ति, इत्थमात्मोत्कर्षेण परेषा लाघवमापादयन्ति, मासकल्पादिसामाचार्यास्तु सांप्रत सस्तारकव्यत्ययादिनैव श्रुतधरैः समर्थनात्, तदुक्तम्–"कालाइ दोसओ पुण न दव्वओ एस कीरई नियमा। भावेण उ कायव्वो सथारगवच्चयाईहिं ॥ १ ॥" द्रव्यतस्तु मासकल्पः पञ्चकल्पभाष्यादिभिः तदुचितक्षेत्राद्यभाव मदद्भिर्निषिद्ध एव, तथा च तद्भाष्यम्–"ज देवलोयसरिस खित्त निप्पज्जयाइय जं च। एसो उ खेत्तकप्पो देसा खलु अद्धछव्वीस ॥१॥" तथा–"आसन्नखित्तकाल बहुपाउग्गा न सति खित्ताओ। निच्चं च विभत्ताण सच्छदाई बहू दोसा ॥ २ ॥" इत्यादि तच्चूर्णिस्तु–'सपय मासकप्पपाउग्गाणि नत्थि त्ति', उष्णोदकपान तु–'उसिणोदग तिदडुक्कलिय'मितिवचनात् तादृशस्य तु प्राय सांप्रत नित्यं दुःप्रापत्वात् प्रासस्यापि च 'उसिणोदगतत्तभोइणो' इत्यादि सूत्रकृताङ्गद्वितीयाध्ययनद्वितीयोद्देशकनिर्युक्तिवचनस्य उष्णत्वाभिधानेऽपि यत् पुनस्तप्तग्रहण तत् तस्य तप्तस्यैव पानयोग्यत्वोपदर्शनमिति वृत्तौ व्याख्यानात् सर्वदोष्णजलपान-

भागे हि क्रियमाणे निर्गुणस्य परिहारे तस्य महान् सताप आपादितो भवति, स च ससारवृद्धये, सर्वभक्तिविधाने तु गुणिनामपि भक्तिविधानादवश्य संसारोच्छेद इति । अथ चायुक्तः तेषामभिप्रायो, यत पूर्वाचार्यैः पार्श्वस्थादीना दर्शनस्यापि निषेधेनाष्टादशशीलाङ्गसहस्रधारिणामेव वन्दनादिप्रतिपत्तिरभ्यधायि, नाविशेषेण, एवविधमध्यस्थताया तु उपहास्यत्वात्, तदुक्तम्–"धीमद्भि प्रविचार्यकार्यमखिलं वस्त्वैहिकामुष्मिकम्, ज्ञात्वा दोषगुणांश्च दोषविमुखै कार्यो गुणेष्वादरः । एव हीष्टयुतिर्भवत्यपरथा समूर्च्छिममायता, पीयूष च विषं च तुल्यमदता का नाम मध्यस्थता ॥ १ ॥" तस्मादनादरणीया एवविधमध्यस्थता, ते तु एवं मध्यस्थज्ञानिनो भूत्वा सपद्य, अनुस्वारलोपः प्राकृतत्वात्, किं कुर्वन्तीत्याह, इति वक्ष्यमाणप्रकारेण 'आज्ञा' आप्तोपदेशस्तया 'विरुद्ध' विरोधभाक्, 'ब्रुवते' भाषन्ते, अत एव तत् कुत्सितम् असम्यक्, श्रुतमाकर्णितं कुश्रुत, सुश्रुतमपि वा कुत्सितमसम्यग् बुद्धमवगत कुबुद्धं, तथा च कुश्रुत च कुबुद्ध चेति द्वन्द्वः, न हि सुश्रुतस्य सुबुद्धस्य वाऽऽज्ञाविरुद्धत्वं कदाचिदपीति भाव इति वृत्तार्थः ॥ २० ॥

कीदृशा सन्त किं च भाषन्त इत्याह—

नियमइकयसामायारिचारित्तसन्ना, मुसियजलजणोहा सुत्तउत्तिण्णबोहा ।
वयमिह चरणड्ढा हत नन्निति विंता, परपरिभवमत्तुक्कासमुल्लासयति ॥ २१ ॥

व्याख्या–'निजमत्या' आत्मीयबुद्ध्या स्वविकल्पेन 'कृता' विहिता 'सामाचारी' साधुकृत्यविशेषरूपा साम्प्रतमपि मासकल्प-

विहारोष्णोदकपानसार्धहस्तत्रितयमानकल्पधारणपटलकधारणपात्रमात्रकातिरिक्तोपधिवर्जनादिलक्षणा, तस्याः 'चारित्रसञ्ज्ञा' विशुद्धसयमनाम यैः ते तथा, पुन कीदृशा 'सूत्रोत्तीर्णबोधाः' श्रुतोपदेशातिक्रान्तपदार्थज्ञाना, न हि सूत्रे क्वचिदपि स्वय प्रकल्पितसामाचार्याः चारित्रत्वमुक्त, तथा 'मुषितजलजनौघाः' डलयोरेकत्वमिति लक्षणात् जला जडा मूर्खा इत्यर्थः, ततश्च मुषिता वसन–पान–भोजनाद्यादानेन तस्करैरिव लुण्टिता 'जडजनौघा' मूर्खलोकसमूहा यैस्ते तथा, ईदृशाश्च सन्त ते किं वदतीत्याह–'वयमिह चरणाढ्या' वयमित्यात्मनिर्देशे तदपि सावधारण द्रष्टव्य, यदाह–नान्य इति नापरेऽपि केचित् इह प्रवचने चरणाढ्याः सशुद्धसयमसयुक्ता, 'हते'ति विषादे, एवं च ब्रुवाणास्ते 'परेषा' शेषसाधूना 'परिभव'तिरस्कारम्, आत्मनस्तु 'उत्कर्ष' सर्वोत्कृष्टत्वमुल्लासयन्ति जने विस्फारयन्ति, इत्थमात्मोत्कर्षेण परेषां लाघवमापादयन्ति, मासकल्पादिसामाचार्यास्तु साम्प्रत सस्तारकव्यत्ययादिनैव श्रुतधरैः समर्थनात्, तदुक्तम्–"कालाइ दोसओ पुण न दव्वओ एस कीरई नियमा। भावेण उ कायव्वो सथारगवच्चयाईहिं ॥ १ ॥" द्रव्यतस्तु मासकल्पः पञ्चकल्पभाष्यादिभिः तदुचितक्षेत्राद्यभाव वदद्भिर्निषिद्ध एव, तथा च तद्भाष्यम्–"ज देवलोयसरिस खित्त निप्फन्नवाइय ज च। एसो उ खेत्तकप्पो देसा खलु अद्धछवीस ॥१॥" तथा–"आसन्नखित्तकाल वहुपाउग्गा न सति खित्ताओ। निच्चं च विभयाण सच्छंदाई वहू दोसा ॥ २ ॥" इत्यादि तच्चूर्णिस्तु–'सपय मासकप्पपाउग्गाणि नत्थि त्ति', उष्णोदकपान तु–'उसिणोदग तिदडुक्कलिय'मितिवचनात् तादृशस्य तु प्राय सांप्रत नित्य दुष्प्रापत्वात् प्रासुकस्यापि च 'उसिणोदगतत्तभोइणो' इत्यादि सूत्रकृताङ्गद्वितीयाध्ययनद्वितीयोद्देशकनिर्युक्तिवचनस्य उष्णत्वाभिधानेऽपि यत् पुनस्तग्रहण तत् तस्य तप्तस्यैव पानयोग्यत्वोपदर्शनमिति वृत्तौ व्याख्यानात् सर्वदोष्णजलपान-

स्यापि असम्भवात्, कषायद्रव्याहतस्य च अलस्य उत्कृष्टश्रावकैः श्राविकाभिश्च स्वकुटुम्बाद्यर्थमपि विधानादेषणीयस्य तस्य साधूनामुचितत्वेन गीतार्थैः सम्प्रति अभ्यनुज्ञानात्, कदाचित् चतुर्थरसिक्ततिलतन्दुलधावनादेरपि अनिषेधात्, तथा सार्द्धहस्ततृतीयमानकल्पस्य सार्द्धहस्तद्वितीयमानस्य पटलकस्यैकत्र मीलनात् पट्करप्रमाणकल्पमाचीर्णवन्तो गीतार्थाः, शैक्षकागीतार्थादीनां धृतिसंहननास्वत्वेन प्रमादबाहुल्याच्च, भिक्षाटनादौ पात्रप्रावरणादिपटलककार्यस्य तेनैव पट्करप्रमाणेन प्रसाधनात्, पात्रमात्रकातिरिक्तोपकरणग्रहणमपि औपग्रहिकस्यातिरिक्तस्यापि ग्रहणात्, तथा च जघन्योत्कृष्टमध्यमौपग्रहिकानन्तरमुक्तम् –"ज चसमेयमाई तव संजमसाहग जइजणस्स। ओहाइरेग गहिय उवगहिय त वियाणाहि ॥ १ ॥" इत्यादिवचनात्, गीतार्थाश्रयणदर्शनाच्च न तद्वर्जनमिति, तथा च न निजमतिकल्पितसामाचार्याश्चारित्रत्वमिति न तदुपदर्शितमार्गेऽपि भवद्भिरवधातव्यमिति वृत्तार्थः ॥ २१ ॥

एवं तावत् क्रियाविकलानां लिङ्गिनां स्वमकल्पितक्रियाचारिणां मध्यस्थज्ञानिनां च स्वरूपमभिधाय अथ तादृशामेव लाभपूजाख्यातीर्लोके उपलभ्य सविषादमाह—

कुगुरूसु दढभत्ता तप्पहे चेव रत्ता, असुणियसुयतत्ता साहुधम्म(म्मे)पमत्ता ।
गुरुकुलकमचत्ता सकिलेसप्पसत्ता, अहह कहमपत्ता चेव ही खाइपत्ता ॥ २२ ॥

व्याख्या—अहह कथमपात्ररूपा एव ख्यातिं प्राप्ता इति सम्बन्धः, 'कुगुरुषु' तात्त्विकज्ञानक्रियाविकलेषु आचार्यादिषु सुदृढ-

मतिशयेन भक्ता एते एव सम्यग् गुरव इति भावतो बाह्यभक्तिभाजः, तथा 'तत्पथे' कुगुरूपदिष्टमार्गे एव पूर्वोक्ते रक्ताः अन्तरङ्गानुरागवन्त, तथोभयेऽपि 'अज्ञातश्रुततत्त्वाः' अविदितसिद्धान्तपरमार्थाः, यदि हि ते विदितश्रुततत्त्वा अभविष्यन्, तदा न तथा क्रियावैकल्य स्वकल्पितक्रियाबहुमानो वा तेपामभविष्यत्, अत एव च 'साधुधर्मे' आगमाचरणाविशेषप्रतिष्ठितानुष्ठानरूपे उभयेऽपि 'प्रमत्ताः', एके तावन्निद्राविकथाकषायविषयासक्तत्वेन, अपरे तु मिथ्याभिनिवेशवशात् स्वकल्पितक्रियानुरागेण, तथा 'गुरुकुल' सद्गुरुजनाधिष्ठितसुसाधुसमूहस्तस्य 'क्रमो' दशविधचक्रवालसामाचारीप्रभृतिकः समाचारः तेन 'त्यक्ता' वर्जिता, उभयेऽपि प्रमत्तत्वोक्तहेतुद्वयादेव, तथा 'सङ्क्लेशे' क्रूरतया वि(चि)त्तविप्लवे 'प्रसक्ताः' अत्यन्तप्रतिबद्धा, एके तावत् सुविहितविद्वेपणक्रियापरिहारानुचिन्तनेन च, अपरे तु स्वकल्पितक्रियाभिनिवेशेनेति, 'अहहेति' खेदे, कथं केन प्रकारेण प्रचण्डदशमाश्चर्यमाहात्म्यादिना, किमित्याह—पात्राणि सद्गुणमहामाणिक्यकरण्डकाः तद्विपरीतानि तु न पात्राणि अपात्राणि सर्वथा विशुद्धसयमरत्नानाधारा एवासाधव, पुँल्लिंगता प्राकृतत्वात्, 'चः' समुच्चये, एवोऽवधारणे, स च योजित एव, 'ही' इत्यपि खेद एव, 'ख्यातिं' सुसाधुतया प्रसिद्धिं, 'प्राप्ता' लब्धवन्त, अहहेति (अहहहीति) खेदवाचिपदद्वयोपादानमत्यन्तखेदप्रतिपादनार्थं, महत्कष्टस्थानमेतद् यदेवंविधास्तिरस्कारयोग्या अपि शुद्धसाधुमार्गप्रतिकूलचारित्वेन सुसाधुकीर्त्तिमाप्नुवन्तीति वृत्तार्थः ॥२२॥

अथ पूर्वोक्तस्वरूपे कुगुरावपि सुगुरुप्रतिपत्तिं कुर्वता श्रावकाणा स्वरूपमाह—

कुगुरुवयणदूढा ससयावत्तछूढा, अइवहुभवरूढातुच्छमिच्छत्तमूढा ।

स्यापि असमवात्, कपायग्रव्याहतस्य च अलस्य उत्कृष्टश्रावकै श्राविकाभिश्च स्वकुटुम्बार्थमपि विधानादेपणीयस्य तस्य साधूनामुचितत्वेन गीतार्थै संप्रति अभ्यनुज्ञानात्, कदाचित् चतुर्थरसिक्ततिलतन्दुलधावनादेरपि अनिषेधात्, तथा सार्द्धहस्ततृतीयमानकल्पस्य सार्द्धहस्तद्वितीयमानस्य पटलकस्यैकत्र मीलनात् पट्करप्रमाणकस्यमाचीर्णवन्तो गीतार्था, शैक्षकागीतार्थादीना धृतिसहननाल्पत्वेन प्रमादबाहुल्याच, भिक्षाटनादौ पात्रप्रावरणादिपटलककार्यस्य तेनैव पट्करप्रमाणेन प्रसाधनात्, पात्रमात्रव्यतिरिक्तोपकरणग्रहणमपि औपग्रहिकस्यातिरिक्तस्यापि ग्रहणात्, तथा च जघन्योत्कृष्टमध्यमौपग्रहिकानन्तरमुक्तम् –"ज चजमेचमाई तव सजमसाहग जइजणस्स। ओहाइरेग गहिय उवगहिय त वियाणाहि ॥ १ ॥" इत्यादिवचनात्, गीतार्थाभयणदर्शनाच न तद्वर्जनमिति, तथा च न निजमतिकल्पितसामाचार्योश्चारित्रत्वमिति न तदुपदर्शितमार्गेऽपि भवद्भिरवधातव्यमिति वृत्तार्थः ॥ २१ ॥

एव तावत् क्रियाविकलाना लिङ्गिनां स्वप्रकल्पितक्रियाचारिणां मध्यस्थज्ञानिना च स्वरूपमभिधाय अथ तादृशामेव लाभपूजाख्यातीर्लोके उपलभ्य सविषादमाह—

कुगुरुसु दढभत्ता तप्पहे चेव रत्ता, अमुणियसुयतत्ता साहुधम्म(म्मे)पमत्ता ।
गुरुकुलकमचत्ता सकिलेसप्पसत्ता, अहह कहमपत्ता चेव ही खाइपत्ता ॥ २२ ॥

व्याख्या—अहह कथमपात्ररूपा एव ख्यातिं प्राप्ता इति सम्बन्धः, 'कुगुरुषु' तात्त्विकज्ञानक्रियाविकलेष आचार्यादिष मन्त-

अथ दुष्टाग्रेसरदशमाश्चर्यादिप्रभावादत्यन्तनिर्गुणसाधुवेषधारिकृतं गाढपरिभवं सद्गुणसाधुजनस्यावलोक्य तान् उपालम्भुमाह—

अइ दुसमदुरतच्छेरय ! भासरासी !, दुसमसमय ! हभो तुम्भमेसप्पभावो ।
जमिह कवडकूडा साहुलिंगी गुणड्ढे, परिभविय पहुत्तं जंति नंदन्ति दूरं ॥ २४ ॥

व्याख्या–'अइ' इति कोमलामन्त्रणे दशस्वाश्चर्येषु दशम सुसाधूना तिरस्कारेण तद्दुःखदायित्वेन दुरन्तमाश्चर्यं कादाचित्कभावरूपं, तस्य सम्बोधनम् अयि दुःषमदुरन्ताश्चर्य ! तथा भो भस्मराशे ! दुष्टत्रिंशग्रहविशेष ! तथा 'हभो' इति प्राकृतसम्बोधन, तच्च दुःषमासमये त(त्य)स्यादौ योजनीयं, ततो भो ! दुःषमासमय ! अवसर्पिणीपञ्चमारक विशेषेऽपि त्रीनपि दशमाश्चर्यादीन् प्रत्येकं सम्बोध्य उपालम्भमाह–'युष्माकं' भवतामेष वक्ष्यमाणः 'प्रभावो' माहात्म्य, यदित्यादिना उपालम्भ्य वस्तु आह–यत् किलेह प्रवचने, साधूनां लिङ्ग रजोहरणादिक विद्यते येषां ते तथा, विशेष्यपदं चैतत्, किंविशिष्टाः सन्तः ? इत्याह—विश्वासनीयवेषोपदर्शनेन तदननुसारिवचनक्रियाविशेषाः कपटा वितथवादिनः कूटाः ततश्च कपटाश्च ते कूटाश्च इत्यादिकर्मधारयः, ते च किं कृतवन्तः ? इत्याह–'गुणाढ्यान्' ज्ञानादिक्षान्त्यादिसमस्तयतिधर्मैश्वर्यवतः, 'परिभूय' असद्दूषणशतारोपणेन महाजनसमक्षं तिरस्कृत्य, 'प्रभुत्वं' समस्तजनपूज्यत्वेन स्वामित्व 'यान्ति' प्राप्नुवन्ति, न केवल प्रभुत्वं यान्ति, 'नन्दन्ति च' परिवारपूजाख्यात्यादिभिर्वर्धन्ते च, न हि एवंविधात्यन्तनिर्गुणानां दुरन्तदशमाश्चर्यादिमहामात्यसाहाय्यमन्तरेण

अपरिणयसुयत्थ जीवियासत्तघत्थ, सुहगुरुयमेव बिंति मुत्त च देवं॥ २३ ॥

व्याख्या-'कुगुरुणां' पूर्वोक्तस्वरूपाणां वचन यथमिह चरणाभ्या इत्यादिक परकीयचेतो वञ्चनचतुर, तेन 'दूढा' इति प्राकृतत्वाद् व्रीडिता व्रीड प्रापिताः, यथा केचिन्मरणभीरवः केनापि विश्वासवचनैर्दुह्यन्ते, एवमेते अपि कुगुरुभि', तथा 'सशय' सद्गुरुविषय संदेहः स एव 'आवर्त्तो' जलपरिभ्रमः तत्र क्षिप्ताः प्रापिता , पूर्वं हि तैरन्यथा सद्गुरुस्वरूपमवधारित, सप्रति तु अन्यथा श्रवणे दर्शने च संदेहः संपन्न इति, 'तथातिबहुभिः' अत्यन्तप्रभूतै-र्भवैर्जन्मभी 'रूढ' सजातम् 'अतुच्छ' प्रचुर प्रबल यद् 'मिथ्यात्वं' विपर्य्ययज्ञानलक्षणं तेन 'मूढा' विचित्तता प्रापिता , न हि अविपर्यस्तज्ञानिना देवबुद्ध्या कुगुरुदर्शन भवतीति भावः, तथाविधाः सन्तः किं कुर्वन्तीत्याह—परिणतश्चेतसि अङ्गाङ्गिभावेन व्यवस्थितः श्रुतार्थ सिद्धान्ताभिधेयो यस्य स तथोक्तो, न तथेति अपरिणतश्रुतार्थः सं, तथा 'जीविका' भोजनादिजीवनोपायलाभ' तस्या 'आशसा' प्रार्थना तया 'ग्रस्तो' व्याप्तस्तम्, एवमगुणमपि गुरु 'शुभगुरुरय' सकलकल्याणकारी ज्ञानादिपात्र युगप्रधानमित्येव ब्रुवते, लोकाना पुरतोऽपि प्रतिपादयन्ति, मूर्खमिवेत्युपमान, साक्षाद्रूप 'देवं' वीतरागमप्रभुमिति, यथा वीतरागः सर्वथा पर्य्युपास्य एवमयमपीति, तथा चोच्यते—"मिथ्यादृशामुत्तमदेवरूपको न कौतुक यत्प्रतिभात्यसद्गुरुः । पित्तावृताक्षा ह्ययसोऽपि गोलक सौवर्णमेवाकलयन्त्यनाकुलाः ॥ १ ॥" एवविधस्यापि कुगुरोरेवं मुग्धपर्य्युपासनामालोक्यापि न तत्रास्था विधेया इति भाव इति वृत्तार्थ ॥ २३ ॥

अथ दुष्टाग्रेसरदशमाश्चर्याद्विप्रभावादत्यन्तनिर्गुणसाधुवेषधारिकृतं गाढपरिभवं सद्गुणसाधुजनस्यावलोक्य तान् उपालब्धुमाह—

अइ दुसमदुरतच्छेरय ! भासरासी !, दुसमसमय ! हमो तुब्भमेसप्पभावो ।
जमिह कवडकूडा साहुलिंगी गुणड्ढे, परिभविय पहुत्तं जति नदन्ति दूरं ॥ २४ ॥

व्याख्या—'अइ' इति कोमलामन्त्रणे दशस्वाश्चर्येषु दशम सुसाधूना तिरस्कारेण तद्दुःखदायित्वेन दुरन्तमाश्चर्यं कादाचित्कभावरूप, तस्य सबोधनम् अयि दुःषमदुरन्ताश्चर्य ! तथा भो भस्मराशे ! दुष्टत्रिंशग्रहविशेष ! तथा 'हमो' इति प्राकृतसम्बोधन, तच्च दुःषमासमये त(त्य)स्यादौ योजनीयं, ततो भो ! दुःषमासमय ! अवसर्पिणीपञ्चमारक विशेषेऽपि त्रीनपि दशमाश्चर्यादीन् प्रत्येकं सबोध्य उपालम्भमाह—'युष्माकं' भवतामेष वक्ष्यमाण' 'प्रभावो' माहात्म्य, यदित्यादिना उपालम्भ्य वस्तु आह—यत् किलेह प्रवचने, साधूना लिङ्ग रजोहरणादिक विद्यते येषा ते तथा, विशेष्यपद चैतत्, किंविशिष्टाः सन्तः ? इत्याह—विश्वासनीयवेषोपदर्शनेन तदननुसारिवचनक्रियाविशेषाः कपटा वितथवादिनः कूटाः ततश्च कपटाश्च ते कूटाश्च इत्यादिकर्मधारय', ते च किं कृतवन्तः ? इत्याह—'गुणाढ्यान्' ज्ञानादिक्षान्त्यादिसमस्तयतिधर्मैश्वर्यवतः, 'परिभूय' असद्दूषणशतारोपणेन महाजनसमक्षं तिरस्कृत्य, 'प्रभुत्व' समस्तजनपूज्यत्वेन स्वामित्व 'यान्ति' प्राप्नुवन्ति, न केवल प्रभुत्व यान्ति, 'नन्दन्ति च' परिवारपूजाख्यात्यादिभिर्वर्धन्ते च, न हि एवविधात्यन्तनिर्गुणाना दुरन्तदशमाश्चर्यादिमहामात्यसाहाय्यमन्तरेण

एव प्रभुत्व वृद्धिर्येति, न खलु प्रावृषेण्यजलदोन्नतिमन्तरेण गोनसविषधरविषविकारवृद्धिः, पठ्यते च—"मेकेन फणता सरोषपरुष यत्कृष्णसर्पानने, दातु कर्णचपेटमुद्धतधिया हस्तः समुल्लासितः। यच्चाधोमुखमीक्षणे विदधता तेनापि तन्मर्पितं, तन्मन्ये विषमन्त्रिणो बलवतः कस्यापि लीलायितम् ॥ १ ॥" इति। तदेव यदि ईदृशानामपि एव प्रभुत्व वृद्धिश्च तन्नून युष्मत्प्रभावविलसितमिति उपालम्भ इति वृत्तार्थः ॥ २४ ॥

तदेव केषाचित् तावद् गुरूणामपि क्रियाशैथिल्येऽपरेषां च स्वप्रकल्पितसामाचारीपरत्वे, केषाचित्तु मध्यस्थभावावलम्बनेन गुरूणा प्राचुर्ये, श्राद्धजनस्यापि प्रभूतस्य तद्भक्तत्वे शुद्धधर्मश्रद्धालूनां, केषाचित् श्राद्धानां यत् सप्रति सपन्न तदाह—

किर बहुपहुपासे धम्मसुस्सूसणाए, कुमयविउडणेणासकिया हुति भावा।
नवसुविहियसेवासत्त तत्तत्थियाण, कहमिव विवरीय जायमञ्चो इयाणिं ॥ २५ ॥

व्याख्या—'किलेति' आप्तवादे 'बहवः' प्रभूताश्च ते प्रभव आचार्याश्च, तेषां 'पार्श्वे' समीपे 'धम्मसुस्सूसणाए' इति प्राकृत स्यात् धर्मशुश्रूषया इत्यर्थः। ततश्च धर्मस्य सुखाशुभश्रावकसमाचारलक्षणस्य शुश्रूषा—श्रवणवाञ्छा तया श्रवणमुपलक्ष्यते, ततः किल बहुभिः श्रोतव्य बहुभ्यः श्रोतव्यमिति सिद्धान्तप्रसिद्धे बहुभ्यः श्रवणे 'कुमतविकुट्टनेन' शाक्यश्रोतादिदर्शनस्य सर्वथा निषेधनेन 'आशङ्किता' निस्सदेहा 'भवन्ति' सपद्यन्ते 'भावा' देवगुरुधर्मरूपाः पदार्थाः, एकस्माद् हि धर्मस्वरूपमात्रं ज्ञातमन्यस्माच्च तदेव विशिष्टमपरस्माद् विशिष्टतरमित्येवं सर्वथा पदार्थेषु संदेहो निवर्तत इति स्थितिः, एतत्तु इदानींत्र

विपरीतमस्माक सवृत्तमित्याह–'नवा' अपूर्वा अपूर्वा ये 'सुविहिताः' सुविहितमन्या न पुनः परमार्थत सुविहिता एव, तेषा 'सेवा' समासन्नावस्था विनयादिरूपपर्युपासना, तस्याम् 'आसक्ता' अत्यन्तमादरवन्त तेषाम्, अत्र षष्ठीबहुवचनलोपो द्रष्टव्यः, तया 'तत्त्वार्थिना' सद्गुरुसद्धर्मज्ञानाभिलाषुकाणा, कथ केन प्रकारेण दुष्टकर्मोदयरूपेण इति तत्त्वप्राप्तिप्रकारेण, कचित् कथमिवेति पाठः, स च सुगम एव, विपरीत संशयोच्छेदाय प्रवृत्ताना–मधिकतरसशयहेतुत्वेन विपर्य्यस्त 'जात' सम्पन्न, 'अवो' इति प्राकृते अहो इत्यर्थे सम्बोधन, ततश्चात्यन्तविषण्णा इव तत्त्वार्थिनश्चिन्तयन्ति कथयन्ति च–अहो लोकाः ! पश्यत अस्मदीया कर्मपरिणतिं येनेद–मित्थं सम्पन्नम् 'इदानीं' साप्रतम्, अयमभिप्राय–नवनवप्रभुपर्य्युपासने हि तेषु कश्चित् प्रतिमायाः पुष्पधूपनैवेद्यदुग्धदधिघृतेक्षुरसादिस्नात्र श्राद्धस्य विधेयमाह, अपरस्तु तस्य सर्वथा निषेधं, कश्चिच्च प्रतिमादेराचार्येण प्रतिष्ठाम्–अपरस्तु श्राद्धेन, कश्चित् शक्रस्तवादिदण्डकपञ्चकेन स्तुतिस्तोत्रैश्चैत्यवन्दनम्, अन्यस्तु शक्रस्तवमात्रेण, द्वादशावर्त्तवन्दनकमपि श्राद्धस्य कश्चिन्मुखवस्त्रिकया, कोऽपि चेलाञ्चलेन, श्राद्धादेरुभयकाल–मावश्यकविधानम् इतरश्च तन्निषेधमित्यादेः प्रभूताचार्यमतस्य श्रुतौ न कृत्यस्याभिगमः सम्यगभूत्, प्रत्युत किमिद कृत्यमुतान्यत्, किं वा ततोऽप्यन्यदिति सदेहशताकुलत्वमेवाजायत, तेनोक्त विपरीत जातमिति वृत्तार्थः ॥ २५ ॥

तदेव प्रभूतमार्गाभासानुपदर्श्य सप्रति उपसहरन् सन्मार्गनिष्ठत्वभवनोपदेशमाह—

इयकुपहपयार सुद्धधम्मंधयारं, परिलसिरमसारं छड्डिउ निव्वियार ।
सइ अणभिनिविट्ठा सुत्तजुत्तीविसिट्ठा, गयभयमयतिट्ठा होह सम्मग्गनिट्ठा ॥ २६ ॥

एष प्रभुत्व वृद्धिर्येति, न खलु प्रावृषेण्यजलदोन्नतिमन्तरेण गोनसविषधरविषविकारवृद्धिः, पठ्यते च—"भेकेन क्वणता सरोषपरुषं यत्कृष्णसर्पानने, दातुं कर्णचपेटमुद्धतधिया हस्तः समुल्लासितः । यच्चाधोमुखमीक्षणे विदधता तेनापि तन्मर्षितं, तन्मन्ये विषमन्त्रिणो बलवतः कस्यापि लीलायितम् ॥ १ ॥" इति । तदेव यदि ईदृशानामपि एव प्रभुत्व वृद्धिश्च तन्नून युष्मत्प्रभावविलसितमिति उपालम्भ इति वृत्तार्थः ॥ २४ ॥

तदेवं केषाचित् तावद् गुरूणामपि क्रियाशैथिल्येऽपरेषां च स्वप्रकल्पितसामाचारीपरत्वे, केषाञ्चित्तु मध्यस्थभावावलम्बनेन गुरूणां प्राचुर्ये, श्राद्धजनस्यापि प्रभूतस्य तद्भक्तत्वे शुद्धधर्मश्रद्धालूनां, केषाचित् श्राद्धानां यत् सम्प्रति संपन्नं तदाह—

किर बहुपहुपासे धम्मसुस्सूसणाए, कुमयविउट्टणेणासंकिया हुंति भावा ।
नवसुविहियसेवासत्त तत्तत्थियाण, कहमिव विवरीयं जायमन्नो इयाणिं ॥ २५ ॥

व्याख्या—'किलेति' आप्तवादे 'बहवः' प्रभूताश्च ते प्रभव आचार्याश्च, तेषां 'पार्श्वे' समीपे 'धम्मसुस्सूसणाए' इति प्राकृतत्वात् धर्मशुश्रूषया इत्यर्थः । ततश्च धर्मस्य सुसाधुसुश्रावकसमाचारलक्षणस्य शुश्रूषा—श्रवणवाञ्छा तया श्रवणमुपलक्ष्यते, ततः किल बहुभिः श्रोतव्यं बहुभ्यः श्रोतव्यमिति सिद्धान्तप्रसिद्धेः बहुभ्यः श्रवणे 'कुमतविकुट्टनेन' शाक्यभौतादिदर्शनस्य सर्वथा निषेधनेन 'आशङ्किता' निस्संदेहा 'भवन्ति' संपद्यन्ते 'भावा' देवगुरुधर्मरूपाः पदार्थाः, एकस्माद् हि धर्मस्वरूपमात्र ज्ञातमन्यस्माच्च तदेव विशिष्टमपरस्माद् विशिष्टतरमित्येवं सर्वथा पदार्थेषु संदेहो निवर्तत इति स्थितिः, एतत्तु इदानींत्र

# अथ दशम कुलकम् ।

नवमे हि कुलके स्वदर्शन एवाभिनिवेशादिवशा-दुपजातावान्तरमतान्तरनिवृत्त्या भावरूपं सन्मार्गनिष्ठत्वमुपदिष्ट, दशमे तु कामादिभावनिषेधेन धर्ममार्गनिश्चलत्वोपदिश्यत, इत्येवसम्बद्धस्यास्य नरभवाद्यसुलभलाभे स्वहितधर्मकर्मोपदेश वृत्तत्रयेणाह—

इत्थुग्गकुग्गहकुसासणभिल्लभीमे, चिंताविसुक्कडकसायमहाभुयगे ।
अन्नाणदारुणदवे नवनोकसाय-लच्छकसावयगणे भवसंकडिल्ले ॥ १ ॥
जीवा चउग्गइगया कुलकोडिजोणी-लक्खेसु दुक्खतविया बहुसो भमति ।
दीहद्धमेव भवकायठिईहिं धम्म-कम्मक्खम नरभवाइ न पाउणति ॥ २ ॥
गभीरनीरनिहिनट्ठमणिं व धम्म-सामग्गिमित्थ समिलाजुगजोगतुल्लं ।
एमेव पाविय हिं पि कहिं चि काग-तालीयनायवसओ सहिय करेह ॥ ३ ॥

व्याख्या-अत्र स्थावरजङ्गमादिपदार्थोपलम्भरूपतया प्रत्यक्षे भवसंकडिल्ये संसारगहने जीवा बहु भ्रमन्तीति सम्बन्धः, की-

व्याख्या—इति कुपथप्रचार त्यक्त्वा यूय सन्मार्गनिष्ठा भवतेति योगः, 'इति' पूर्वोक्तप्रकारा ये 'कुपथा' सूत्रोत्तीर्णत्वेन कुमार्गा लिङ्गिकल्पितस्वकल्पितसामाचारीचारित्रादिलक्षणा, तेषु 'प्रचारः' प्रवर्त्तन 'छड्डिव ति' त्यक्त्वा, एतत् त्यागे हि सम्यक् सन्मार्गनिष्ठत्वमिति भावः, किंविशिष्टं ? 'शुद्धधर्मस्य' आगमगीतार्थाचरणरूपस्य विधिविधीयमानानुष्ठानस्य अन्धकारमिवान्धकार तदाच्छादकत्वात्, कुलिङ्गिप्रभृतिप्रवर्त्तितमार्गे हि प्रसरति सति क्व शुद्धधर्मप्रचार ? इति भाव, पुन कीदृश ? 'परिलसिरम्' अत्यन्तोल्लसनशील, केनापि अस्खलितत्वात्, तथा 'निर्विचारम्' आगमानुसारिविचारविकलम्, अत एवासार तुच्छम्, अप्रधान वा, कुपथप्रचार त्यक्त्वा कीदृशाः किं कुरुतेत्याह—भवत सपद्यध्व, कीदृशाः ? सन्मार्गनिष्ठा सन्मार्गे प्रतिस्रोतोरूपविशुद्धविधिपथे निष्ठा निश्चलमनस्कतयाऽवस्थान येषां ते तथा, कीदृशाः सन्त ? इत्याह—'सकृत्' सर्वदा 'अनभिनिविष्टा' आग्रहरहिताः तथा 'सूत्रयुक्त्या' श्रुतोपपत्त्या 'विशिष्टा' अनुरञ्जिता सर्वमपि अनुष्ठान श्रुतोक्त्यनुसारि अभिनिवेशरहित च क्रियमाण सफल भवतीति उभयविशेषणविशिष्टत्वोपादान, तथा तिड्डाशब्दो देशीभाषया कार्पण्ये, ततश्च 'गतभयमदकार्पण्यविशेषा' निवृत्ताहंकारत्रासकार्पण्याः, सभवति हि विधिधर्ममार्गप्रवृत्तौ मिथ्याधर्मजनकादिभय कदाचिदितरेभ्योऽहमुत्कृष्ट इति मदश्च, दानादिप्रवर्त्तने च कार्पण्यमिति, ते च विधिधर्ममार्गप्रवृत्तौ वर्जनीया एव, तद्वर्जन एव सम्यग् निःशंकविधिधर्मनिर्वाहादिति भाव इति वृत्तार्थः ॥ २९ ॥ सर्वत्र चात्र कुलके मालिनीवृत्तमेवेति शुभम् ॥

इति श्रीयुगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचितायां द्वादशकुलकवृत्तौ नवमकुलकविवरण समाप्तम् ॥

# अथ दशम कुलकम् ।

नवमे हि कुलके स्वदर्शन एवाभिनिवेशादिवशा-दुपजातावान्तरमतान्तरनिवृत्त्या भावरूपं सन्मार्गनिष्ठत्वमुपदिष्ट, दशमे तु कामादिभावनिषेधेन धर्ममार्गनिश्चलतोपदिश्यत, इत्येवसम्बद्धस्यास्य नरभवाद्यसुलभलाभे स्वहितधर्मकर्मोपदेश वृत्तत्रयेणाह—

इत्थुग्गकुग्गहकुसासणभिल्लभीमे, चिंताविसुक्कडकसायमहाभुयगे ।
अन्नाणदारुणदवे नवनोकसाय-लच्छकसावयगणे भवसंकडिल्ले ॥ १ ॥
जीवा चउग्गइगया कुलकोडिजोणी-लक्खेसु दुक्खतविया बहुसो भमति ।
दीहद्धमेव भवकायठिईहिं धम्म-कम्मक्खम नरभवाइ न पाउणंति ॥ २ ॥
गभीरनीरनिहिनट्ठमणिं व धम्म-सामग्गिमित्थ समिलाजुगजोगतुल्लं ।
एमेव पाविय हिं पि कहिं चि काग-तालीयनायवसओ सहिय करेह ॥ ३ ॥

व्याख्या-अत्र स्थावरजङ्गमादिपदार्थोपलम्भरूपतया प्रत्यक्षे भवसंकडिल्ये संसारगहने जीवा बहु भ्रमन्तीति सम्बन्ध, की-

दृशे? 'उग्रः' प्रचण्ड 'कुग्रहः' कदभिनिवेशो येषां ते तथा, युक्तिबाधितत्वेन कुत्सितं शासनं शास्त्रं येषां ते तथा, ततश्चोग्रकु-
ग्रहाश्च ते कुशासनाश्चेति कर्मधारय, अथवा उग्रः कुग्रहो यस्मात् तथाविधं शासनं येषामिति, त एवातिक्रूरचित्ततया दुष्टस-
घनत्वेन च 'भिल्लाः' पर्वतवासिचौरा तैः 'भीमे' भीषणे, तथा 'चिन्ता' नानाविधानर्थानुध्यानं सा एव महामोहहेतुत्वाद् 'विष'
गरलं तेन 'उत्कटा' अतिप्रबला ये 'कषाया' क्रोधादयस्ते एव मरणभवबन्धनिदानत्वात् 'महाभुजङ्गा' गुरुसर्प्पा यत्र तत्तथा तत्र,
तथा 'अज्ञान' मिथ्याज्ञानं तदेव समस्तसम्यक्त्वादिगुणदारुदाहकत्वाद् 'दव' आरण्यको ज्वलनो यत्र तत्तथा(तत्र), तथा 'नवेति'
नवसंख्या 'नोकषायाः' कषायसहचारिणो हास्यादयः त एव सुमुनिजनमनःकुरङ्गत्रासोत्पादकत्वाद् 'लुब्धका' रौद्रा श्वापदगणाः
सिंहव्याघ्रतरक्षादिपशुसमूहा यत्र तत्तथा तत्र, एवंविधे भवगहने ॥१॥ 'जीवाः' प्राणिनः 'चतुर्गतिगता' नरकादिगतिचतुष्टयाव-
स्थिताः सन्तः, कुलकोटयश्च योनयश्च पूर्वव्याख्याताः तासां 'लक्षेषु' शतसहस्ररूपेषु 'भ्रमन्ति' पर्य्यटन्ति, कीदृशाः सन्तो ?
'दुःखतप्ताः' शारीरमानसव्यथाव्यथिताः, बहुशोऽनेकवारं, कियन्तं कालमित्याह—'दीर्घो' महानुत्सर्पिण्यादिरूपोऽद्धा काल-
स्तम्, एवकारोऽवधारणे, ततश्च महामिथ्यादृशां दीर्घकालमेवेति, शेषाणां तु अनियमः, केन केनेत्याह, भवकायस्थितिभ्यां
पृथिव्यादिषु चतुर्षु पुनः पुनः तत्रैवोत्पत्ते—रसंख्यातोत्सर्पिण्यवसर्पिणीनामवस्थानरूपा वनस्पतिषु च ता एवानन्ता अवस्था-
नमिति कायस्थितिः। भवस्थितिस्तु एकदा पृथिव्यादिषूत्पत्तौ द्वाविंशतिवर्षसहस्राद्यवस्थानं, भवस्थितिस्तावत् पञ्चमकुलकादा-
वुक्ता—"बावीसइ सहस्सा सत्तेवसहस्स तिन्निहोरत्ता । वाए तिन्नि सहस्सा दसवाससहस्सिया रुक्खा ॥१॥ एवं कालं पर्य्य-
ट्यापि किमित्याह—'नरभवो' मनुष्यजन्म तदादिकम्, आदिशब्दात् प्रधानक्षेत्रादिग्रहः, 'न प्राप्नुवन्ति' नैव लभन्ते, कीदृशा

धर्मकर्माणि देवपूजाप्रव्रज्यादिसदनुष्ठानानि तेषु क्षम समर्थं, न हि नरभवमन्तरेण प्रव्रज्या क्वापि प्राप्यते ॥२॥ तदियता नरभवादेर्दुर्लभत्व प्रकाश्य दुर्लभस्यापि यद्वद् यथा च प्राप्ति तदुपदर्शनपूर्वक स्वहितकरणोपदेशमाह—गम्भीरेत्यादिना, 'गम्भीर' अत्यन्तनिम्नः स चासौ नीरनिधिश्च समुद्रः तत्र 'नष्ट' कथचिद् भ्रष्ट मणिमिव रत्नमिवेत्युपमान, धर्मसामग्रीं सुकृतसाधनसमग्रता नरत्वादिकाम्, इत्थमिति अत्र भवारण्ये, कीदृशीं ? समिलाया युगेन योग पूर्वोदितस्वरूपः तत्तुल्या तत्समा, यथा समिलाया युगेन योगो दुर्घटः तद्वत् नरत्वसुक्षेत्रादियोग एकत्र मीलकोऽपीति भावः, ईदृशीं च इमाम्, एवमेवेति यकारलोपादेवमेवेति पाठे जन्मान्तरीयसुकृतोल्लासादित्यर्थः, 'प्राप्य' लब्ध्वा, कथचिदिति दैववशात्, तथा क्वचिदपि देशविशेषे काकतालीयज्ञातं पूर्वोक्त, तस्य 'वश' आयत्तता ततः, पूर्वं हि नरत्वादेरेव युगसमिलाज्ञातेन दुर्घटत्वमुक्तम् इह तु काकतालीयज्ञातेन तल्लाभस्येति न पौनरुक्त्यम्, एव चात्यन्तदुःप्राप(पा) धर्मसामग्रीं प्राप्य स्वहितमात्मानुकूल धर्मकृत्य वक्ष्यमाणरूप कुरुत विधत्तेति वृत्तत्रयार्थ ॥ ३ ॥

अथ धर्मकृत्य प्रचिकटयिषु पीठमारचयन्नाह—

जतू य दुक्खविमुहासइ सुक्खकखी, सुक्खं च अक्खयमभिक्खणमाहु मुक्खे ।
सम्मत्तनाणचरणाणि य तस्सुवाओ तस्साहणाय पुण रे ! इय निच्चकिच्चं ॥ ४ ॥

व्याख्या–'जन्तवश्च' प्राणिन पुन 'च' पुनरर्थे, 'दुःखविमुखा' स्वशरीरादिबाधापराङ्मुखा, तथाऽ'सकृत्' सर्वदा 'सुख-

दृशे? 'उग्र' प्रचण्डः 'कुग्रहः' कदभिनिवेशो येषां ते तथा, युक्तिबाधितत्वेन कुत्सितं शासन शास्त्रं येषां ते तथा, ततश्चोग्रकुग्रहाश्च ते कुशासनाश्चेति कर्मधारय, अथवा उग्र कुग्रहो यस्मात् तथाविध शासन येषामिति, त एवातिक्रूरचित्ततया दुष्टवचनत्वेन च 'भिल्लाः' पर्वतवासिचौराः तैः 'भीमे' भीषणे, तथा 'चिन्ता' नानाविधानर्थानुध्यान सा एव महामोहहेतुत्वाद् 'विष' गरल तेन 'उत्कटा' अतिप्रबला ये 'कषाया' क्रोधादयस्त एव मरणप्रबन्धनिदानत्वात् 'महाभुजङ्गा' गुरुसर्पा यत्र तत्तथा तत्र, तथा 'अज्ञानं' मिथ्याज्ञान तदेव समस्तसम्यक्त्वादिगुणदारुदाहकत्वाद् 'दव' आरण्यको ज्वलनो यत्र तत्तथा(तत्र), तथा 'नवेति' नवसंख्या 'नोकषायाः' कषायसहचारिणो हास्यादयः त एव सुमुनिजनमनःकुरङ्गत्रासोत्पादकत्वाद् 'उल्का' रौद्राः श्वापदगणाः सिंहव्याघ्रतरक्षादिपशुसमूहा यत्र तत्तथा तत्र, एवंविधे भवगहने ॥१॥ 'जीवाः' प्राणिनः 'चतुर्गतिगता' नरकादिगतिचतुष्टयावस्थिता सन्तः, कुलकोटयश्च योनयश्च पूर्वव्याख्याताः तासां 'लक्षेषु' शतसहस्ररूपेषु 'भ्रमन्ति' पर्य्यटन्ति, कीदृशा सन्तो? 'दुःखतप्ताः' शारीरमानसव्यथाव्यथिताः, बहुशोऽनेकवार, कियन्तं कालमित्याह—'दीर्घो' महानुत्सर्पिण्यादिरूपोऽद्धा कालस्तम्, एवकारोऽवधारणे, ततश्च महामिथ्यादृशा दीर्घकालमेवेति, शेषाणां तु अनियमः, केन केनेत्याह, भवकायस्थितिभ्यां पृथिव्यादिषु चतुर्षु पुनः पुनः तत्रैवोत्पत्ते—रसंख्यातोत्सर्पिण्यवसर्पिणीनामवस्थानरूपा वनस्पतिषु च ता एवानन्ता अवस्थानमिति कायस्थिति। भवस्थितिस्तु एकदा पृथिव्यादिषूत्पत्तौ द्वाविंशतिवर्षसहस्राद्यवस्थानं, भवस्थितिस्तावत् पञ्चमकुलकावधुक्ता—"बावीसई सहस्सा सत्तेवसहस्स तिन्निहोरत्ता। वाए तिन्नि सहस्सा दसवाससहस्सिया रुक्खा ॥१॥ एव कालं पर्य्यट्यापि किमित्याह—'नरभवो' मनुष्यजन्म तदादिकम्, आदिशब्दात् प्रधानक्षेत्रादिग्रह, 'न प्राप्नुवन्ति' नैव लभन्ते, कीदृश

धर्मकर्माणि देवपूजाप्रव्रज्यादिसदनुष्ठानानि तषु क्षम समथ, न हि नरभवमन्तरेण प्रव्रज्या क्वापि प्राप्यते ॥२॥ तदियता नरभ-
वादेर्दुर्लभत्व प्रकाश्य दुर्लभस्यापि यद्वस्तु यथा च प्राप्तिः तदुपदर्शनपूर्वक स्वहितकरणोपदेशमाह—गम्भीरेत्यादिना, 'गम्भी-
रः' अत्यन्तनिम्नः स चासौ नीरनिधिश्च समुद्रः तत्र 'नष्ट' कथचित् भ्रष्टं मणिमिव रत्नमिवेत्युपमान, धर्मसामग्रीं सुकृतसाधनस-
मग्रता नरत्वादिकाम्, इत्थमिति अत्र भवारण्ये, कीदृशीं ? समिलाया युगेन योग पूर्वोदितस्वरूप तत्तुल्यां तत्समा, यथा
समिलाया युगेन योगो दुर्घटः तद्वत् नरत्वसुक्षेत्रादियोग एकत्र मीलकोऽपीति भावः, ईदृशीं च इमाम्, एवमेवेति चकार-
लोपादेयमेवेति पाठे जन्मान्तरीयसुकृतोल्लासादित्यर्थः, 'प्राप्य' लब्ध्वा, कथचिदिति दैववशात्, तथा क्वचिदपि देशविशेषे
काकतालीयज्ञात पूर्वोक्त, तस्य 'वश' आयत्तता ततः, पूर्वं हि नरत्वादेरेव युगसमिलाज्ञातेन दुर्घटत्वमुक्तम् इह तु काकता
लीयज्ञातेन तल्लाभस्येति न पौनरुक्त्यम्, एव चात्यन्तदु प्राप(पा) धर्मसामग्रीं प्राप्य स्वहितमात्मानुकूल धर्मकृत्य वक्ष्यमा
णरूप कुरुत विधत्तेति वृत्तत्रयार्थः ॥ ३ ॥

अथ धर्मकृत्य प्रचिकटयिषु पीठमारचयन्नाह—

जतू य दुक्खविमुहासइ सुक्खकखी, सुक्ख च अक्खयमभिक्खणमाहु मुक्खे।
सम्मत्तनाणचरणाणि य तस्सुवाओ तस्साहणाय पुण रे ? इय निच्चकिच्च ॥ ४ ॥

व्याख्या—'जन्तवश्च' प्राणिन पुन 'चः' पुनरर्थे, 'दुःखविमुखा' स्वशरीरादिबाधापराङ्मुखाः, तथाऽ'सकृत्' सर्वदा 'सुख-

काङ्क्षिणः' स्वात्मनि आनन्दसंवेदनाभिमुखाः, 'सौख्यं' चाक्षय-मनश्वर-मभीक्ष्ण-निरन्तरानुभवं चाहु ब्रुवते तीर्थकरादयः, क्वेत्याह-'मोक्षे' कृत्स्नकर्मक्षयलक्षणे, स्वर्गादौ हि तद् भवदपि नाविनश्वरं नापि निरन्तरमिति, तथाविधसुखलाभोऽपि कथमित्याह-सम्यक्त्वज्ञानचारित्राण्येव प्रसिद्धानि, चोऽवधारणे, 'तस्य' मोक्षसुखस्य 'उपायो' निदानं, तथा च किमित्याह-'तेषां' सम्यक्त्वज्ञानचारित्राणां 'साधनाय' निष्पादनाय पुनः, 'रे'! इत्यधर्मामन्त्रणवत् अतिलघुसम्बोधनेऽपि वर्त्तते, इति साध्व्यपेक्षया लघुतरश्राद्धसम्बोधनेऽत्र द्रष्टव्यं, ततो रे! इति भोः श्राद्धाः! इत्येतद्वक्ष्यमाणं 'नित्यकृत्यं' प्रतिदिनविधेयमनुष्ठानं वर्त्तते इति, तच्छृणुतेति, अथवा नित्यं सर्वदा कृत्यं कार्यं, भवद्भिरिति गम्यते, अनुस्वारलोपः प्राकृतत्वादिति, क्वापि चेइयति पाठः तत्र, चैत्यानां जिनप्रतिमानां नित्यकृत्यं चैत्यवन्दनपूजनादिकं सार्वदिकं विधेयं, तत् कुरुतेति शेषः, तस्यापि सम्यक्त्वविशुद्धिहेतुत्वादिति भावः, इति वृत्तार्थः ॥ ४ ॥

तदेव प्रतिपादयिषुः प्रथमं तावत् तदुपदेशकगुरुसेवामाह—

संविग्गसग्गुरुकमागयजुत्तजुत्ती-वीसंतसुत्तपरमत्थविऊ जयंत ।
सेवेह धम्मगुरुणो बहुमाणभत्ति-रागेण ताण वयणं च मणे धरेह ॥ ५ ॥

व्याख्या-'संविग्ना' मोक्षाभिलाषुकाः ते च ते सद्गुरवश्च चतुर्दशपूर्वधरप्रभृतयः तेषां 'क्रमः' परिपाटिः संप्रदायः तेनागतं शिष्यप्रशिष्यन्यायेनाधीतं, तथा 'युक्ता' सुगताः प्रमाणाबाधिता 'युक्तयः' उपपत्तयः तासु 'विश्रान्तं' व्यवस्थितं, ततश्च सद्गु-

रुक्रमागत च तद् युक्तयुक्तिविश्रान्त च, तच्च तत् सूत्र च श्रुत च, तस्य परमार्थ तत्त्व तद् विदन्ति जानन्ति ये ते तद्विदः विभक्तिलोपः प्राकृतत्वात्, तथा 'जयंत' इति प्राकृतत्वाद् यतमानान्, साधुक्रियास्विति गम्यते, 'धर्मगुरून्' सन्मार्गोपदेशकाचार्यान्, 'सेयत' विनयादिविधानेन पर्य्युपासत। अयमभिप्रायः—"अवलंबिऊण कज्ज ज किंची आयरति गीयत्था। थोवावराहबहुगुण सव्वेसिं त पमाण ति ॥१॥" इत्यादि श्रुत तावत् सद्गुरुक्रमागत, तत्र च पाश्चात्यश्रुतधरैर्द्रव्यतो मासकल्पप्रायोग्यक्षेत्राद्यभावाद्वियुक्तयुक्तिविश्रान्तो मासकल्पविहारवद् इत्यस्य प्रमाणोपपन्नतया दृष्टान्तीकृतत्वे परमार्थ कः सपक्षो द्रव्यतो मासकल्पनिषेधः तदेव गीतार्थाचरितमपि द्रव्यतो मासकल्पाविहारमवमत्य ये द्रव्यतो मासकल्पविहार व्यवस्थापयन्ति ते परमार्थतः श्रुतापलापकारिणो बोद्धव्या', तदुक्तम्—"यत्प्रायोग्यवरक्षेत्राद्यभावेऽपि वदन्ति ये। मासकल्पमिदानीमप्याधेय द्रव्यतोऽपि च ॥ १ ॥ तेऽनुकुर्वन्ति विच्छिन्नजिनकल्पप्रधावुकान्। श्रुतसंहननोद्रेकाभिःस्वात्मन दिगम्बरान् ॥ २ ॥ तदेवम् 'अवलंबिऊण कज्जमित्येतद्' दृष्टान्तत्वमात्रेणोक्तम् एव अन्यस्यापि श्रुतधरस्य युक्तयुक्तिविश्रान्तत्वं ये विदन्ति ते सुसाधव सेव्या इति भावः, न केवल सेवत, किन्तु 'बहुमान' अन्तरङ्गप्रीतिः तद्विशिष्टो 'भक्तिरागो' बाह्यप्रतिपत्तिरूपोऽनुराग. तेन, तेषा सेवनीयसद्गुरूणा 'वचन' धर्मोपदेशप्रतिबद्ध वाक्य च, 'मनसि' चित्तेऽवधारयत अवस्थापयत, सद्गुरुवचसो स्थापने हि तद्भक्ति व्यज्यते, सद्धर्मानुष्ठानप्रवृत्तिश्च सम्यग् भवतीति भाव इति वृत्तार्थः ॥ ५ ॥

अथ इन्द्रियवशीकारादि–उपदेशमाह—

वेरग्गभावणकसासुगुरूवएस–रज्जूहि इंदियतुरंगगणं दमेह ।

काङ्क्षिणः' स्वात्मनि आनन्दसंवेदनाभिमुखाः', 'सौख्यं' चाक्षय-मनश्वर-मभीक्ष्णं-निरन्तरानुभवं चाहु ब्रुवते तीर्थकरादयः', कस्याह-'मोक्षे' कृत्स्नकर्मक्षयलक्षणे, स्वर्गादौ हि तद् भवदपि नाविनश्वरं नापि निरन्तरमिति, तथाविधसुखलाभोऽपि कथमित्याह-सम्यक्त्वज्ञानचारित्राण्येव प्रसिद्धानि, चोऽवधारणे, 'तस्य' मोक्षसुखस्य 'उपायो' निदानं, तथा च किमित्याह-'तेषां' सम्यक्त्वज्ञानचारित्राणां 'साधनाय' निष्पादनाय पुनः, 'रे'! इत्यधर्मामन्त्रणवत् अतिलघुसम्बोधनेऽपि वर्त्तते, इति साम्प्रतं क्षया लघुतरश्राद्धसबोधनेऽत्र द्रष्टव्यं, ततो रे! इति भो श्राद्धाः! इत्येतद्वक्ष्यमाणं 'नित्यकृत्यं' प्रतिदिनविधेयमनुष्ठानं वर्त्तते इति, तत्कुरुध्वमिति, अथवा नित्यं सर्वदा कृत्यं कार्यं, भवद्भिरिति गम्यते, अनुस्वारलोपः प्राकृतत्वादिति, क्वापि चेइ- चेति पाठः तत्र, चैत्यानां जिनप्रतिमानां नित्यकृत्यं चैत्यवन्दनपूजनादिकं सार्वदिकं विधेयं, तत् कुरुतेति शेषः, तस्यापि सम्यक्त्वविशुद्धिहेतुत्वादिति भावः, इति गाथार्थः ॥ ४ ॥

तदेव प्रतिपादयिषुः प्रथमं तावत् तदुपदेशकगुरुसेवामाह—

संविग्गसग्गुरुकमागयजुत्तजुत्ती—वीसंतसुत्तपरमत्थविऊ जयत ।
सेवेह धम्मगुरुणो बहुमाणभत्ति—रागेण ताण वयणं च मणे धरेह ॥ ५ ॥

व्याख्या-'संविग्नाः' मोक्षाभिलाषुकाः ते च ते सद्गुरवश्च चतुर्दशपूर्वधरप्रभृतयः तेषां 'क्रमः' परिपाटिः संप्रदायः तेनागतं शिष्यप्रशिष्यन्यायेनाधीतं, तथा 'युक्ता' सुगता प्रमाणाबाधिता 'युक्तयः' उपपत्तयः तासु 'विश्रान्तं' व्यवस्थितं, ततश्च सद्गु-

नट्ठा य ते सयमसग्गकुहेउजुत्ती, असेसि नासणकए बहुहा वयाति ।
पाय जणा सयमईइ अभाविभद्धा, त चेव तत्तमिव लिंति चइति मग्गं ॥ ८ ॥

व्याख्या–'जना' लोकाः तावत् सामान्येन 'बहुसक्लेशाः' प्रभूतचित्तविप्लुवा वर्त्तन्ते, कुत इत्याह–'कालादिदोषवशतो' दुःष मावुरन्तदशमाश्चर्यादीना यो दोषोऽशुभभाववर्धनादिलक्षणोऽपराधस्तस्मात्, तथा 'घनानि' निबिडबन्धनहेतु(बद्ध)त्वेन चिक्कणानि यानि 'कर्माणि' ज्ञानावरणादीनि तै 'क्लिष्टा' स्वपरयोर्बाधाहेतुः 'चेष्टा' प्राणातिपातादिरूपा क्रिया येषा ते तथा तेषा भावः तत्त्व तेन, 'च' समुच्चये, 'तो' इति ततो हेतुद्वयाद् लोकस्य बहुसक्लेशत्वे सति किमित्याह–'लिङ्गिनः' क्रियादिविकला साधवो 'गृहिणश्च' श्रावकाः, 'दृढम्' अत्यर्थ 'विमूढा' अत्यन्तमोहभाजः, चशब्दौ द्वयोरपि तुल्ययोगक्षेमताप्रतिपादनार्थौ, एवविधाश्च सन्त ? 'किं किम्' इत्यनिर्दिष्टविशेषम्, 'अनुचित' लोकलोकोत्तरविरुद्ध देवद्रव्योपयोगप्रवचनात्यन्तलाघवकारि परस्परकलहादिक च धर्मपरायणजनायोग्य तद् यत् 'न आचरन्ति' न कुर्वन्ति ? अपि तु सर्वमपि समाचरन्ति, नकारो भिन्नक्रमे योजनीयः, 'चिर' बहुकाल निरन्तरमित्यर्थ ॥७॥ ते चानुचिताचरणशीला साध्वादयः, 'स्वयम्' आत्मना तावत् 'नष्टाः' कुग्राहकुविकल्पैः सर्वथा सदाचाराद् भ्रष्टा तादृशाश्च सन्तोऽन्येषा मुग्धबुद्धीना 'नाशनकृते' नाशनाय सदाचारभ्रशनार्थं, किमित्याह–'असङ्गकुहेतुयुक्तीर्वदन्ति', तत्र सङ्ग स्वसाध्येन सम्बन्धो, न विद्यते सङ्गो येषा हेतूना चाक्षुषत्वादीनामिव शब्दानित्यत्वे साध्ये तेऽसङ्गाः, कुहेतवोऽसिद्धत्वादिदोषदुष्टानि साधनानि, कुशब्दस्य युक्तिभिरपि सम्बन्धात् कुयुक्तयः, स्वसा-

नाणकुसेण गुणपायवलग्गमुद्दा–मुद्दामकामकरिण सवस विहेह ॥ ६ ॥

व्याख्या–'वैराग्यभावना' स्त्र्यादिविषयाणाम् अशुभसञ्ज्ञाभावन सा एवेन्द्रियतुरङ्गदमनपटीयस्त्वात् 'कशा' चर्मयष्टिः, तथा 'सुगुरूणां' शुद्धचारित्रिणाम् 'उपदेशाः' कामकटुविपाकत्वोपदेशकवाक्यानि, ते एव 'रश्मयो' नियन्त्रणवरत्रा' ततश्च वैराग्यभावनकशा च सुगुरूपदेशरश्मयश्चेति द्वन्द्वः ताभिः, 'इन्द्रियाणि' स्पर्शनादीनि तान्येव चञ्चलत्वात् 'तुरङ्गा' अश्वाः तेषां 'गणः' समूहस्त, 'दमयत' नियन्त्रयत, तथा ज्ञान योषिदादिशरीरयथावस्थितस्वरूपावबोधः तदेव कामकरिवशीकारहेतुत्वात् 'अङ्कुशः' सृणिः तेन, किं कुरुत? इत्याह–'गुणा' ज्ञानचारित्राद्यस्ते एवावान्तरभेदशाखाद्भिमत्त्वात् 'पादपा' तरवः तेषु 'लग्न' भञ्जनाय सम्बद्ध, तथा उद्गत दाम बन्धन शृङ्खलादिक यस्मादसौ उद्दामा, स चासौ उद्दामकामश्च अत्युत्कटमदनश्च स एव महामदोत्पत्तिनिमित्तत्वात् 'करी' हस्ती त, 'स्ववशम्' आत्मायत्त 'विधत्त' कुरुतेति वृत्तार्थः ॥ ९ ॥

अथ लिङ्गिना कुत्तीर्थिकाना च चेष्टितमुत्कीर्त्य शुद्धजिनधर्ममार्गे लगतेति वक्ष्यति, तत्र पूर्व तावत् लिङ्गिना कुचेष्टित वृत्तद्वेनाह–

कालाइदोसवसओ घणकम्मकिट्ट–चिट्टत्तणेण य जणा बहुसकिलेसा ।
तो लिंगिणो य गिहिणो य तह विमूढा, किं किं न ज [illegible] ॥ १० ॥

नट्ठा य ते सयमसग्गकुहेउजुत्ती, अन्नेसि नासणकए बहुहा वयति ।
पाय जणा सयमईइ अभाविभत्ता, त चेव तच्चमिव लिंति चइति मग्ग ॥ ८ ॥

व्याख्या–'जना' लोकाः तावत् सामान्येन 'बहुसक्लेशाः' प्रभूतचित्तविप्लवा वर्त्तन्ते, कुत इत्याह–'कालादिदोषवशतो' दुःष मावुरन्तदशमाश्चर्यादीना यो दोषोऽशुभभाववर्धनादिलक्षणोऽपराधस्तस्मात्, तथा 'घनानि' निबिडबन्धनहेतु(बद्ध)त्वेन चिक्कणानि यानि 'कर्माणि' ज्ञानावरणादीनि तै 'क्लिष्टा' स्वपरयोर्बाधाहेतुः 'चेष्टा' प्राणातिपातादिरूपा क्रिया येषा ते तथा तेषा भावः तत्त्व तेन, 'च' समुच्चये, 'तो' इति ततो हेतुद्वयाद् लोकस्य बहुसक्लेशत्वे सति किमित्याह–'लिङ्गिनः' क्रियादिविकलाः साधवो 'गृहिणश्च' श्रावकाः, 'दृढम्' अत्यर्थ 'विमूढा' अत्यन्तमोहभाजः, चशब्दौ द्वयोरपि तुल्ययोगक्षेमताप्रतिपादनार्थौ, एवविधाश्च सन्तः ? 'किं किम्' इत्यनिर्दिष्टविशेषम्, 'अनुचित' लोकलोकोत्तरविरुद्ध देवद्रव्योपयोगप्रवचनात्यन्तलाघवकारि परस्परकलहादिक च धर्मपरायणजनायोग्य तद् यत् 'न आचरन्ति' न कुर्वन्ति ? अपि तु सर्वमपि समाचरन्ति, नकारो भिन्नक्रमे योजनीय, 'चिर' बहुकाल निरन्तरमित्यर्थः ॥७॥ ते चानुचिताचरणशीला साध्वादय, 'स्वयम्' आत्मना तावत् 'नष्टाः' कुग्राहकुविकल्पैः सर्वथा सदाचाराद् भ्रष्टाः तादृशाश्च सन्तोऽन्येषा मुग्धबुद्धीना 'नाशनकृते' नाशनाय सदाचारभ्रशनार्थ, किमित्याह–'असङ्गकुहेतुयुक्तीर्वदन्ति', तत्र सङ्ग स्वसाध्येन सम्बन्धो, न विद्यते सङ्गो येषा हेतूना चाक्षुषत्वादीनामिव शब्दानित्यत्वे साध्ये तेऽसङ्गा, कुहेतवोऽसिद्धत्वादिदोषदुष्टानि साधनानि, कुशब्दस्य युक्तिभिरपि सम्बन्धात् कुयुक्तयः, स्वसा-

'याताधिकाः कुत्सितोपपत्तयः ता 'बहुधा' बहुभिः प्रकारैः 'वदन्ति' ब्रुवते, तथाहि—जिनशासने साधूना पार्श्वस्थादीनामपि क्वचिद् वन्दनमभ्यधायि, आधाकर्मादेरपि क्वचिद् ग्रहण—मभ्यनुज्ञातम्, एकाकिनोऽपि साधो क्वचिद् विहार उक्त—स्तस्मात्—"न वि किंचि अणुन्नाय पडिसिद्धं वा वि जिणवरिंदेहिं । मुत्त(त्तुं) मेहुणभाव न त विणा रागदोसेहिं ॥ १ ॥" इत्यादियुक्ते सर्वथाऽपि अयुक्तप्रतिषेधेन युक्त एव प्रवर्त्तितव्यम् इत्येवरूपो विधिधर्ममार्गे क्वावकाश लभता, तथा च साम्प्रत न सन्त्येव सुसाधुसुश्रावका तदुचितानुष्ठानस्य अनिर्वाहाद्, इत्यादिवचनै अन्यानपि नाशयन्ति, तच्चायुक्त, यत उत्सर्गापवादाभ्या जिनमते सर्वमनुष्ठान स्थित, ततश्च यदि अपवादेन कदाचित् पार्श्वस्थादिवन्दनकाऽऽधाकर्मादिकमुक्तम्, एतावता किमायात 'न वि किंचि अणुन्नायमित्यादि' अव्यवस्थाया ? इति कुयुक्तिरेषा, तथाऽयुक्तप्रतिषेध—युक्तप्रवृत्तिरूपो विधिधममार्गोऽपि स्तोक स्तोकः क्वचिदवश्यमभ्युपेतव्योऽन्यथा तु प्रसभान्तचरणोक्तेः मिथ्यात्वप्रसङ्गात्, तथा च न सन्त्येव सम्प्रति सुसाधव इत्याद्यनुमान "ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवत्", इत्यनुमानवदागमबाधितमिदमनुमानम्, एव च कुहेतुता, तथा तदुचितानुष्ठानस्यानिर्वाहादिति, स्वसाध्यासम्बद्धो हेतुः असङ्ग, यतोऽत्र सुसाध्वभाव साध्यः तत्र च न वर्त्तते हेतु, अनुष्ठानानिर्वाहो ह्यनुष्ठाने वर्त्तते, न तु साधुषु इति, ततश्च धवल प्रासादः काकस्य कार्ष्ण्यादिवद् व्यधिकरणो हेतुरयमसङ्गः, अयमपि असिद्धहेत्वाभासभेद एव, पक्षेऽसंभवत्वात्, एवं चासङ्गकुहेतुयुक्तीर्वदतीति सिद्धम्, एतदेव नष्टकुलिङ्गिभाषितमेव सत्त्वमिव यथावस्थितवस्तुस्वरूपमिव नूनमेतद् लिङ्गिदर्शितम्, अधुना साध्वाद्यभावम् इत्थमेव 'लान्ति' गृह्णन्ति प्रतियन्ति, न केवल गृह्णन्त्येव अपि तु 'त्यजन्ति' परिहरन्ति, तदुक्ता

भ्रमिताः सन्तो 'मार्गं' शुद्धविधिधर्मपर्यामाते, अथवा मार्गम् अनेकान्तवादलक्षण तस्यैव प्रामाणिकत्वात्, तद्विपरीतैका-न्तवादसाधने हि ये हेतवः ते सर्वेऽपि असिद्धत्वादिदोपदुष्टा एव, तथा चोच्यते-"असिद्ध सिद्धसेनस्य विरुद्धो मल्लवा-दिनः । उभय समन्तभद्रस्य हेतुरेकान्तसाधने ॥ १ ॥" इति, त मार्गं तात्त्विकमोक्षपथ त्यजन्तीति, के इत्याह-'जना' मुग्ध-लोका 'स्वमत्या' आत्मीयबुद्ध्यैव, कीदृशा सन्त इत्याह-भावि भविष्यत् सपत्स्यमान भद्र सुगतिलाभादिलक्षण कल्याण येषा ते तथा, न तादृशा अपि तु अभाविभद्राः, तत् किं सर्वेऽप्येव ? नेत्याह-'प्रायो' बाहुल्येन, मुग्धा हि निर्विचारका केचिद्, अन्ये तु प्रगल्भबुद्धयो जिनमततत्त्वाभिज्ञा न गृह्णन्त्येवेति वृत्तार्थ ॥ ८ ॥

उक्त लिङ्गिचेष्टितम् अथ कुतीर्थिकचेष्टितमाह—

मिच्छत्तछन्नपडिकप्पियजुत्तिहीण-नाणाकुसत्थमयमूढकुतित्थियाणं ।

दुव्वासणाविनडिया पडिया वसे ही, जीवा कयाइ न भवंति भवंतगामी ॥ ९ ॥

व्याख्या-कुतीर्थिकाना वशे पतिता जीवा भवान्तगामिनो न भवन्तीति योगः, कीदृशानामित्याह-'मिथ्यात्वच्छन्नानि' विपर्यस्तज्ञानान्तरितानि तद्धर्माणीति यावत्, 'छन्नेति' पाठपक्षे तु मिथ्यात्वमेव सज्ज्ञानालोकाच्छादकत्वात् छत्रमातपत्र येषु, तथा 'प्रतिकल्पितानि' प्रमाणमन्तरेण स्वयमुत्प्रेक्षितानि, तदर्थानामुत्प्रेक्षितत्वादिति भाव, तथा 'युक्तिहीनानि' उप-पत्तिविकलानि, अत्रापि तदर्थाना तथात्वादिति भाव, ततो मिथ्यात्वच्छन्नानि च तानि प्रतिकल्पितानि युक्तिहीनानि चेति

यासाधिकाः कुत्सितोपपत्तयः ता 'बहुधा' बहुभिः प्रकारैः 'वदन्ति' ब्रुवते, तथाहि—जिनशासने साधूना पार्श्वस्थादीनामपि क्वचिद् वन्दनमभ्यधायि, आधाकर्मादेरपि क्वचिद् ग्रहण—मभ्यनुज्ञातम्, एकाकिनोऽपि साधो क्वचिद् विहार उक्त—स्तस्मात्—"न वि किंचि अणुन्नाय पडिसिद्ध वा वि जिणवरिंदेहिं । मुत्त(त्तु) मेहुणभाव न त विणा रागदोसेहिं ॥ १ ॥" इत्यादियुक्ते सर्वथाऽपि अयुक्तप्रतिषेधेन युक्त एव प्रवर्त्तितव्यम् इत्येवरूपो विधिधर्ममार्ग क्वावकाश लभता, तथा च साम्प्रत न सन्त्येव सुसाधुसुश्रावका तदुचितानुष्ठानस्य अनिर्वाहाद्, इत्यादिवचनै. अन्यानपि नाशयन्ति, तच्चायुक्त, यत उत्सर्गापवादाभ्या जिनमते सर्वमनुष्ठान स्थित, ततश्च यदि अपवादेन कदाचित् पार्श्वस्थादिवन्दनकाऽऽधाकर्मादिकमुक्तम्, एतावता किमायात 'न वि किंचि अणुन्नायमित्यादि' अव्यवस्थाया ? इति कुयुक्तिरेपा, तथाऽयुक्तप्रतिषेध—युक्तप्रवृत्तिरूपो विधिधर्ममार्गोऽपि स्तोक स्तोकः क्वचिदवश्यमभ्युपेतव्योऽन्यथा दुःप्रसभान्तचरणोक्तेः मिथ्यात्वप्रसङ्गात्, तथा च न सन्त्येव सम्प्रति सुसाधव इत्याद्यनुमानं "ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवत्", इत्यनुमानवदागमबाधितमिदमनुमानम्, एष च कुहेतुता, तथा तदुचितानुष्ठानस्यानिर्वाहादिति, स्वसाध्यासम्बद्धो हेतुः असङ्ग, यतोऽत्र सुसाध्वभाव साध्यः तत्र च न वर्त्तते हेतुः, अनुष्ठानानिर्वाहो ह्यनुष्ठाने वर्त्तते, न तु साधुषु इति, ततश्च धवल प्रासादः काकस्य कार्ष्ण्यादिवद् व्यधिकरणो हेतुरयमसङ्गः, अयमपि असिद्धहेत्वाभासभेद एव, पक्षेऽसंबद्धत्वात्, एवं चासङ्कुछुकुकीर्भवतीति सिद्धम्, एतदेव नष्टकुलिङ्गिभाषितमेव तत्त्वमिव यथावस्थितवस्तुस्वरूपमिव नूनमेतद् लिङ्गिदर्शितम्, अधुना साध्वाद्यभावम् इत्थमेव 'लान्ति' गृह्णन्ति प्रतिपद्यन्ति, न केवल गृह्णन्त्येव अपि तु 'त्यजन्ति' परिहरन्ति, तदुक्त्या

तदेवम् उभयेषामपि लिङ्गिनां कुतीर्थिकानां च वर्जनेन धर्मप्रवृत्त्युपदेशमाह—

ता भूरिकुग्गह–कुतित्थि–कुदेसणाउ, सुच्चा वि निच्चमचला जिणधम्ममग्गे।
भो ! लग्गहुज्झियकुधीभयसंकलज्जा, एवं च होहिह सुधम्महिगारिणु त्ति ॥ १० ॥

व्याख्या—यतो लिङ्गिनः कुतीर्थिकाश्च संसर्गेणापि महानर्थकारिण, 'ता' इति ततस्तस्माद् 'भूरयः' प्रभूताः 'कुग्रहा' अभि
निवेशा येषां ते भूरिकुग्रहा लिङ्गिप्रभृतयः, तथा 'कुतीर्थिका' बौद्धादय ततो भूरिकुग्रहाश्च कुतीर्थिकाश्चेति द्वन्द्वः, तत-
स्तेषाम् उभयेषामपि, अथवा भूरिकुग्रहाश्च ते कुतीर्थिनश्चेति तेषां 'कुदेशना' असत्प्रवृत्तिहेतवः सम्प्रति सर्वथा विधिधर्माभा-
वश्राद्धादिविधानप्रभृतय उपदेशाः, ताः 'श्रुत्वापि' आकर्ण्यापि, अपिशब्दस्तच्छ्रुतेरसत्प्रवृत्तिसामर्थ्यमुपदर्शयति, एव-
मपि भोः श्राद्धा ! यूयं 'लगत' सादरमनुपक्ता भवत, क्वेत्याह—'जिनधर्ममार्गः' तीर्थकृत्प्रणीतसुश्रावकसमाचारस्तत्र, कीदृशा
लगत ? इत्याह—निश्चला(अचला) धर्माप्रतिपातिमानसा न तु कुलिङ्गिकुतीर्थिकादि दुर्देशनाश्रुतिसन्दिग्धचित्ता, 'नित्यं' सर्वदा,
पुनः कीदृशा ? 'उज्झितकुधीभयशङ्कालज्जाः' तत्र कुधीर्लिङ्गिप्रभृतिदुर्देशनाजनिता कुत्सितबुद्धिः, भयशंकालज्जास्तु पूर्वव्या
ख्याता तत उज्झिताः त्यक्ताः कुधीभयशंकालज्जा यैस्ते तथा, ह्रस्वत्वं प्राकृतत्वात्। 'एवमिति' एवमेवेत्यर्थः, 'भविष्यथ
सपत्स्यध्वे यूयं, क्वचिदेव 'हीति' पाठस्तत्र हिशब्दोऽवधारणे द्रष्टव्यः, कीदृशा ? 'सुधर्माधिकारिण', सम्प्रति तावत
शोभनद्वादशव्रतादिरूपसुश्रावकधर्मयोग्याः क्रमेण च सुसंयतधर्मयोग्या अपि, इतिशब्दः परिसमाप्तौ, तदेव कुदेशनय
येषां मनो न चाल्यते त एव सुश्रावका इति। दशस्वपि एषु वृत्तेषु वसन्ततिलका च्छन्द इति वृत्तार्थः ॥ १० ॥

कर्मधारयः, तानि च तानि 'नानाकुशास्त्राणि' चानेकसिद्धान्ताः तैः मदोऽहंकारः तेन 'मूढा' विभ्रचित्ततां प्रापिताः, अथवा तादृशानि शास्त्राणि येषां तानि मतानि दर्शनानि तैर्मूढा इति पूर्ववत्, ते च ते 'कुतीर्थिकाश्च' शाक्य-सांख्य-नैयायिक-वैशेषिक-मीमांसकाद्योऽन्यदर्शनिनः तेषां। किमित्याह-'दुर्वासनाविनटिता' निरन्तरं तच्छास्त्रश्रवणानुचिन्तनकुसंस्कारेण विगोपिताः, तथाहि-शाक्या तावत् सर्वं क्षणिकमेवाहुः, सांख्यास्तु गुणत्रयात्मकप्रकृतिविकारभूतं परस्परेणाभिन्नं सर्वमुदासीनपुरुषकल्पितं च जगदिति, नैयायिकवैशेषिकौ तु गुणगुणिनोः अत्यन्तभेदमेव, मीमांसकास्तु तयोर्भेदाभेदं सर्वज्ञाभावं चेति, सर्वत्र चात्र मिथ्यात्वगर्भत्वमेकान्तवादित्वेनैव, क्षणिकत्वस्य प्रकृत्यादीनां च स्वोत्प्रेक्षिततत्वमेव, सर्वथा तत्र प्रमाणाभावात्, यथा चैतदेव तथा सम्मत्यादेः ग्रन्थाद् बोद्धव्यं, गुणगुणिनोः अत्यन्तभेदस्तु प्रत्यक्षविरोधात् निरसनीयः, किं च अत्यन्तभेदे नैयायिकाद्यभिमते सांख्याभिमतेऽत्यन्तभेदे चानुमानाङ्गव्याप्तेरेवाग्रहः, तथा चोक्तम् अनेकान्तजयपताकायाम्-"नान्योऽन्यव्याप्तिरेकान्तभेदेऽभेदे च युज्यते । अतिप्रसङ्गाच्चैक्याच्च शब्दार्थानुपपत्तितः ॥१॥ अन्योऽन्यमिति यद्भेदं व्याप्तिश्चाह विपर्ययम् । भेदाभेदे द्वयोस्तस्मादन्योन्यव्याप्तिसम्भवः ॥ २ ॥" इति, सर्वज्ञाभावे तु शिवस्वर्गमार्गादौ सर्वमानर्थक्यमापद्येत, तस्मादेव स्वोत्प्रेक्षितत्वं युक्तिहीनत्वं च तच्छास्त्रार्थानामित्येवंविधेषु अपि तेषु जीवानां दुर्वासना निरङ्कुशा कर्मवशगाः सम्पद्यन्ते, तेन तद्वासनाविनटिता इत्युक्तं, न केवलं विनटिता 'पतिता' अवस्थिताश्च, क्वेत्याह-'वशे' आयत्ततायां, सामर्थ्यादेव तेषां कुतीर्थिकानामेव, 'हीति' खेदे, 'जीवाः' प्राणिनः, कदाचित् क्वापि काले, 'न भवन्ति' न सम्पद्यन्ते, कीदृशा ? 'भवान्तगामिनः' संसारपर्यन्तप्रापका इति वृत्तार्थः ॥ ९ ॥

तदेवम् उभयेषामपि लिङ्गिनां कुतीर्थिकानां च वर्जनेन धर्मप्रवृत्त्युपदेशमाह—

ता भूरिकुग्गह–कुतित्थि–कुदेसणाउ, सुच्चा वि निच्चमचला जिणधम्ममग्गे।
भो ! लग्गहुज्झियकुधीभयसंकलज्जा, एव च होहिह सुधम्महिगारिणु त्ति ॥ १० ॥

व्याख्या–यतो लिङ्गिनः कुतीर्थिकाश्च संसर्गेणापि महानर्थकारिणः, 'ता' इति ततस्तस्माद् 'भूरयः' प्रभूताः 'कुग्रहा' अभिनिवेशा येषां ते भूरिकुग्रहा लिङ्गिप्रभृतयः, तथा 'कुतीर्थिका' बौद्धादयः ततो भूरिकुग्रहाश्च कुतीर्थिकाश्चेति द्वन्द्वः, ततस्तेषाम् उभयेषामपि, अथवा भूरिकुग्रहाश्च ते कुतीर्थिनश्चेति तेषां 'कुदेशना' असत्प्रवृत्तिहेतवः संप्रति सर्वथा विधिधर्माभावश्राद्धादिविधानप्रभृतय उपदेशाः, ताः 'श्रुत्यापि' आकर्ण्यापि, अपिशब्दस्तत्कृतेरसत्प्रवृत्तिसामर्थ्यमुपदर्शयति, एषामपि भो श्राद्धा ! यूयं 'लगत' सादरमनुपक्ता भवत, क्वेत्याह–'जिनधर्ममार्गे' तीर्थकृत्प्रणीतसुश्रावकसमाचारस्तत्र, कीदृशा लगत ? इत्याह–निश्चला(अचला) धर्माप्रतिपातिमानसा न तु कुलिङ्गिकुतीर्थिकादि दुर्देशनाश्रुतिसन्दिग्धचित्ताः, 'नित्यं' सर्वदा, पुनः कीदृशा ? 'उज्झितकुधीभयशङ्कालज्जाः' तत्र कुधीर्लिङ्गिप्रभृतिदुर्देशनाजनिता कुत्सितबुद्धिः, भयशंकालज्जास्तु पूर्वव्याख्याता ततः उज्झिता त्यक्ताः कुधीभयशंकालज्जा यैस्ते तथा, ह्रस्वत्वं प्राकृतत्वात्। 'एवमिति' एवमेवेत्यर्थः, 'भविष्यथ' संपत्स्यध्वे यूयं, क्वचिदेव 'हीति' पाठस्तत्र हिशब्दोऽवधारणे द्रष्टव्यः, कीदृशा ? 'सुधर्माधिकारिणः', संप्रति तावत् शोभनद्वादशव्रतादिरूपसुश्रावकधर्मयोग्या क्रमेण च सुसयतधर्मयोग्या अपि, इतिशब्दः परिसमाप्तौ, तदेवं कुदेशनया येषां मनो न चाल्यते त एव सुश्रावका इति। दशस्वपि एषु वृत्तेषु वसन्ततिलका च्छन्द इति वृत्तार्थ ॥ १० ॥

सदेवमनेकधा सदुपदेशदानेऽपि ग्रन्थकारः स्वमनोऽभिरुचितनीत्या श्रावकाणा प्रवृत्तिमनुपलभ्यमानोऽप्रस्तुतप्रशसा-लङ्कारेण सविषादम् आत्मचरितानुवादेन श्रावकान् सम्बोधयन्नाह—

भूयोभिः सुकृतै कथचन जनै, कल्पद्रुरासाद्यते,
सप्राप्तोऽभिमत प्रयच्छति सक सकल्पमात्रादपि ।
सोऽप्यस्माभिरलाभ्यभाजि च चिर दध्ये विधायाञ्जलिं,
घोरे व्यक्तमयुक्तमित्यपि वृथाऽभूदित्यचिन्त्यो विधि ॥ ११ ॥

व्याख्या–'भूयोभिः' प्रभूतैः 'सुकृतैः' पुण्यैः 'कथंचन' महाकृच्छ्रेण, 'जनैः' लोकै 'कल्पद्रु' कल्पितार्थप्रदः तरुविशेष 'आसाद्यते' प्राप्यते, ततः किमित्याह–'संप्राप्तो' लब्धः सन् 'अभिमतम्' अभीष्ट मनोवाञ्छित वस्तु 'प्रयच्छति' ददाति, अर्थात् तेभ्य एव जनेभ्य, य· प्राप्त· कल्पद्रु स एव 'सकः' स्वार्थिककप्रत्ययान्तः, कस्मादित्याह–'सकल्पमात्रादपि', संकल्पन सकल्पः चेतसा अभिसन्धान स एव संकल्पमात्र तस्मात्, अयमर्थ –न तद्ग्रहणाय प्रवृत्त्यादिकं करोति, केवल संकल्पयत्येव, य एवंविधो महाप्रभावः कल्पतरु, सोऽपि आस्ता तदितर इत्यपेरर्थः, अस्माभिः अल्पपुण्यै· इत्यात्मनिर्देशो, 'अलाभि' लब्धः, पुण्योदयात्, न केवलं लब्धोऽभाजि च, भजभिज् सेवायामिति पाठात् सेवितश्च, सततसमासन्नावस्थानपुण्यबलिभूपप्रदानादिना

"स्मृध्यै चिन्तायामिति" वचनात्, ध्यातश्च, परमात्मनि एव सम्यगाराधनाय निरन्तरमनुचिन्तितः, किं कृत्वा ? विधाय विरचय्य 'अञ्जलिं' करकुड्मलयोजनरूपम्, एषोऽप्याराधनप्रकारविशेष एव, तत कुत्र किं सवृत्तमित्याह—'घोरे' अत्यन्तरौद्रे अर्थात् ससारे, इत्यपि एवमप्याराधन 'वृथा' निरर्थकमभूत् सम्पन्नम्, एतश्च व्यक्त स्पष्टम् 'अयुक्तम्' असगतमेव, न हि कल्पितार्थप्रद एवं समाराधितश्च कदाचित् कल्पितार्थदानदरिद्र संभाव्यते, ननु कथ तर्हि एतदेव सम्पन्नमित्याह—इत्युक्तेन न्यायेन 'अचिन्त्योऽचिन्तनीयप्रवृत्तिप्रकारोऽय विधिः दैव पुराकृतकर्मलक्षणमिति विधासमाराधितश्च, न केवलमभाजि दध्ये च, द्वचन ग्रन्थकर्तुः, अप्रस्तुतप्रशसा चेय कल्पतरुवक्तव्यतारूपा, तेनायमर्थः—अस्माभिस्तावद् जन्मान्तरीयात्युत्कटसुकृतपटलघशासादितसकलगुणसद्गुरुसपर्यादिना प्राप्त प्रभूतभव्यसभाव्यमानानुग्रहदक्ष सद्वचनपाटवकल्पवृक्षः, स चानुध्यातो निरन्तर भव्यजनप्रतिबोधकाम्यया सेवितश्च अनेकधा सदुपदेशव्यापारणेन अञ्जलिविधानस्थानीय चेह कोमलामन्त्रणादिक द्रष्टव्यम्, एवमतिप्रयत्नेन सेवितोऽपि स्ववचनपाटवकल्पवृक्षः श्राद्धानामुत्तरोत्तरगुणप्रकर्षेण सर्वविरतिप्रतिपत्तियावद् यदा न फलितः तदा नूनम् अस्माकमेवाय विधिः प्रतिकूल इति, पर युष्माभिर्विशेषतो धर्मकर्मसु समुद्यमो विधेय एव, यतो विधेरचिन्तनीयत्वेनेद सूच्यते—यथा क्वचित् तस्य प्रतिकूलप्रवृत्तिः तथा क्वचिदनुकूलत्वेनापि, इत्युपदेश इति शार्दूलविक्रीडितवृत्तार्थः ॥ ११ ॥

इति श्रीयुगप्रधरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचिताया द्वादशकुलकवृत्तौ दशमकुलकविवरणं समाप्तमिति ॥१०॥

अत्थि च्चिय जा तित्थं, विरलतरा केइ मुनिपवरा ॥ १४ ॥
ते य बलकालदेसा-णुसारपालियविहारपरिहारा ।
ईसि सदोसत्ते वि हु, भत्तीबहुमाणमरिहंति ॥ १५ ॥

व्याख्या-यतोऽतिस्तोकचारित्रिजनदर्शिना धीराणां प्रभूतासभजनदर्शनेऽपि मनो न चलति, 'तत्' तस्माद् इह अस्मिन्नेव जम्बूद्वीपवर्त्तिनि न तु धातकीखण्डादिसम्बन्धिनि तस्याप्रस्तुतत्वात्, 'क्षेत्रे' वर्षे, कीदृशे? 'दक्षिणे' मेरोर्दक्षिणदिग्वर्तिनि, 'विरलतरा' मुनिप्रवराः सन्तीति योगः, कीदृशे? 'भस्मराशिग्रहेण विधुरिते' पीडिते, क्षेत्रस्थसुसाधुपीडासद्भावे क्षेत्रे पीडोपचारः, अपिर्विस्मये, पीडिते हि मुनिसद्भावो न संभाव्यत इति भावः। किमित्याह-यावद् यावन्त कालं दुःप्रसभान्तं तीर्थं भगवत्प्रवचनं प्रवर्त्तते,तावदिति शेषः, 'सन्त्येव' विद्यन्ते एव, मुनिप्रवरा शुद्धचारित्रिणः तथा चोक्त व्यवहारभाष्ये -"न विणा तित्थ नियंठेहि नातित्था य नियंठया। छक्कायसंयमो जाव ताव अणुसज्जना दुण्हं ॥१॥" द्वयोरव्यवच्छेदो बकुशकुशीलयो सामायिकच्छेदोपस्थापनीययोर्वेति, कियन्त? इत्याह-'केऽपि' केचित्, अत एवाह-विरलतरा अतिस्तोकाः, ततो यदुक्त चारित्रं साम्प्रत नास्तीति तन्निराकृतमिति। किं च चारित्राभाववादिनः प्रति व्यवहारभाष्ये साक्षेपः परिहार एवमुक्तोऽस्ति "केसिंचि य आएसो दसणनाणेहि वट्टए तित्थं। वुच्छिन्नं च चरित्तं वयमाणे भाविया चउरो ॥ १ ॥" एवं वदति कश्चित् साध्वादौ याप विशुद्ध्यर्थं चतुर्गुरुकाः प्रायश्चित्तविशेषा इत्यर्थः। तथा-"जो भणइ नत्थि धम्मो न य

सामाइय न चेव य वयाइं । सो समणसावगओ कायवो समणसंघेण ॥ १ ॥" तथा पूर्वसाध्वपेक्षया हीनतरक्रियापरिणा-
मत्वेऽपि दुष्पमसाधूना साधुत्वमेव, यदाह—"सत्थपरिन्ना छक्कायअहिगमो पिंड उत्तरज्झाए । रुक्खे वसहो गाइं जोहे
सोही य पुक्खरिणी ॥ २ ॥" अयमर्थः—पूर्वं शस्त्रपरिज्ञाध्ययनमुत्थापनाहेतु—रासीद्, अधुना षट्कायाधिगम षड्जीव-
निकायाध्ययनमित्यर्थः । एव पिण्डग्रहणहेतु—राचारो दशवैकालिक च, तयोत्तराध्ययनानि आचारस्योपरि, इदानीं तु
दशवैकालिकस्येति, पूर्वं वृक्षाः कल्पवृक्षाः, अधुना तु सहकारादयोऽपि ते, शोधिः पाण्मासिकी प्राग्, अधुना पञ्च-
कल्याणकदशकल्याणकादिरिति, न च सा न भवति, एवं पूर्वं गौतमादयः साधवः, सांप्रतं तु अधुना यथाशक्ति
उपयोगवन्त शास्त्रक्रियाविकला अपि साधव एवेति, (१४) नैवैते किंचित्क्रियाहीनत्वे भक्त्यादिक नार्हन्तीत्याह—
ते च भक्त्यादिक—मर्हन्तीति योगः, ये पूर्वमुनिप्रवरा अभिहिताः ते च ते पुनः कीदृशाः सन्तः ! 'बले' शारीरे
मानसे च सामर्थ्ये, 'काले' दुःसमादिरूपो भीष्मादिरूपो वा, देशोऽनूपो मरुदेशो वा, तयो 'बले' चेत्यादिद्वन्द्वः
तथा—अनुसारेऽबाधा, तेन पालितविहारपरिहाराः, तत्र विहारः तावत् सम्यक्धर्मसमाचारिक्रियाकरणं, परिहार इति
सामयिकी भाषा, स च द्विविधः, परिभोगधारणारूपतया, तत्र यद् वस्त्रादिकं प्रत्युपेक्ष्य तदैव परिभुज्यते एष परि-
भोगपरिहारः यत्र प्रत्युपेक्ष्य ध्रियते कम्बलादिकं, न तु तदैवोपभुज्यते स धारणापरिहारः, ततः पालितौ सम्यगासेवितौ
विहारपरिहारौ यैः ते तथा, अनेन यथाशक्ति समस्तक्रियापरत्व—मेषामुक्तम्, एते चेयद् मनाक् प्रमादपरत्वेऽपि क्वाचित्
दुष्पमाप्रभावान्सर्वज्ञज्ञानाभावेऽपि [illegible] निर्दोषत्वे, भक्तिबहुमानवेति तथा

हारद्वन्द्व, तदर्हन्ति तद्योग्या भवन्ति, न तु पार्श्वस्थादिवत् सर्वथा तदयोग्याः, तस्माद् भवद्भिरपि तादृशेषु भक्ति-
बहुमानौ विधेयाविति भाव इति गाथाद्वयार्थः ॥ १४ ॥ १५ ॥

पुनरपि तादृशामेव विशेषतः पूज्यतोपदेशमाह—

**ते य असढ जयता, सुबुद्धिओ मुणियसमयसब्भावा। ईसि सकसायभावे, पि हुति पुज्जा बुहजणाण १६**

व्याख्या—त एव मुनिप्रवरा पूज्या भवन्तीति सम्बन्धः, 'ते चेति' चोऽवधारणे तेन त एव सुसाधवः, कीदृशाः? यत-
मानाः सम्यक् समस्तयतिक्रियासु प्रवर्त्तमानाः, कथमित्याह—'अशठमिति' भावप्रधानत्वान्निर्देशस्य न विद्यते शाठ्यं छद्म
यत्र तदशठमिति क्रियाविशेषणम्, अनेन तेषां क्रियावत्त्वमुक्त, तथा 'सुबुद्धितः' शोभनस्वमतिप्रकाशत्वात् 'ज्ञातसमय
सद्भावाः' विदितसिद्धान्तपरमार्थाः, गुरुस्तु सम्यक् सिद्धान्तरहस्यमभिदधत्सु अपि न जडमतेः कथंचित् सिद्धान्तार्थपरि-
ज्ञानमिति सुबुद्धिग्रहण, न तु स्वात्मप्रेक्षितत्वं सुबुद्धित्व, तस्य सर्वथा सिद्धान्तार्थानवबोधेनानादेयत्वात्, तथा चोच्यते
—"न हि भवति निर्विगोपकमनुपासितगुरुकुलस्य विज्ञानम्। प्रकटितपश्चाद्भाग पश्यत नृत्तं मयूरस्य ॥१॥" इति, अनेन
च ज्ञानवत्त्वम्, एवं च समस्तसाधुगुणसमेतत्व—मुक्त, ततश्च ( ईषत् मनाक् ) सकषायभावेऽपि सञ्ज्वलनक्रोधादिमत्त्वेऽपि,
आस्ता तदभाववत्त्वे इत्यपेरर्थः, अयमभिप्रायः—कदाचित् केनापि गुरुपरिभवे मनाक् क्रोधे परप्रतिवादिनि वा मार्गाधिक्षेप-
कारिणि अहंकारे, क्वचित् भूपादौ सघप्रत्यनीकता भजमाने मायाया, क्वचिदपूर्वशास्त्रग्रहणलोभे सति अपि न साधुत्वध्वंस

हारद्वन्द्वः, तदर्हन्ति तद्योग्या भवन्ति, न तु पार्श्वस्थादिवत् सर्वथा तदयोग्याः, तस्मात् भवद्भिरपि तादृशेषु भक्ति-
बहुमानौ विधेयाविति भाव इति गाथाद्वयार्थः ॥ १४ ॥ १५ ॥

पुनरपि तादृशामेव विशेषतः पूज्यतोपदेशमाह—

ते य असढ जयता, सुवुद्धिओ मुणियसमयसब्भावा। ईसि सकसायभावे, पि हुति पुज्जा वुहजणाण १६

व्याख्या—त एव मुनिप्रवराः पूज्या भवन्तीति सम्बन्धः, 'ते चेति' चोऽवधारणे तेन त एव सुसाधवः, कीदृशाः? यत-
मानाः सम्यक् समस्तयतिक्रियासु प्रवर्त्तमानाः, कथमित्याह—'अशठमिति' भावप्रधानत्वान्निर्देशस्य न विद्यते शाठ्यं छद्म
यत्र तदशठमिति क्रियाविशेषणम्, अनेन तेषां क्रियावत्त्वमुक्तं, तथा 'सुबुद्धितः' शोभनस्वमतिप्रकाशत्वात् 'ज्ञातसमय
सद्भावाः' विदितसिद्धान्तपरमार्थाः, गुरुषु सम्यक् सिद्धान्तरहस्यमभिदधत्सु अपि न जडमतेः कथञ्चित् सिद्धान्तार्थपरि
ज्ञानमिति सुबुद्धिग्रहण, न तु स्वात्मप्रेक्षितत्वं सुबुद्धित्व, तस्य सर्वथा सिद्धान्तार्थानवबोधेनानादेयत्वात्, तथा चोच्यते
—"न हि भवति निर्विगोपकमनुपासितगुरुकुलस्य विज्ञानम्। प्रकटितपश्चाद्भाग पश्यत नृप मयूरस्य ॥१॥" इति, अनेन
च ज्ञानवत्त्वम्, एवं च समस्तसाधुगुणसमेतत्व–मुक्त, ततश्च (ईषत् मनाक्) सकषायभावेऽपि सञ्ज्वलनक्रोधादिमत्त्वेऽपि,
आस्तां तदभाववत्त्वे इत्यपेरर्थः, अयमभिप्रायः—कदाचित् केनापि गुरुपरिभवे मनाक् क्रोधे परप्रतिवादिनि वा मार्गाधिक्षेप-
कारिणि अहङ्कारे, कश्चित् नृपादौ संघप्रत्यनीकतां भजमाने मायायां, क्वचिदपूर्वशास्त्रग्रहणलोभे सति अपि न साधुत्वध्वंस

इति तत्सद्भावेऽपि भवन्ति सपद्यन्ते, 'पूज्याः' सर्वप्रकारेणाराध्याः, 'बुधजनानां' सिद्धान्तरहस्यविचक्षणलोकानां, तदः यूयमपि सद्गुरूपदेशश्रवणादिना बुधाः तादृशानां च सुमुनिषु पूजाविधानं समीचीनमेवेति, एतदुक्तं भवति—समस्ते ष्वपि कुलकेषु देवपूजादिकं श्रावकानुष्ठानं समस्तमपि अभ्यधायि, तस्य चेदं तात्पर्यं—यदुतासमञ्जसजनप्रवृत्तिदर्शनादिना कदाचिन्मनसि नास्थैर्यं विधेयं, तद्विधाने हि सर्वमपार्थकं स्याद् इत्येतत् पर्य्यन्तोपदेशकुलक—मिति गाथार्थः ॥ १६ ॥

इति श्रीयुगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचितायां द्वादशकुलकवृत्तौ द्वादशकुलकविवरणं समाप्तम् ॥
समाप्ता चेयं द्वादशकुलकवृत्ति, नमोऽस्तु सरस्वत्यै, नमोऽस्तु श्रीमज्जिनपतिसूरिपादेभ्यः, शुभं भवतु ॥

---

## प्रशस्ति ।



जयन्ति सन्देहलतासिधाराः श्रोत्रप्रमोदामृतवारिधाराः । सूरेर्गिरः श्रीजिनवल्लभस्य प्रहीणपुण्याङ्गिसुदुर्लभस्य ॥ १ ॥
आसन् नाम मुनीश्वराः सुबहव—श्चारित्रलक्ष्म्यास्पदं, स्तोकाः श्रीजिनवल्लभेन सदृशा निर्भीकवाग्विस्तराः ।
संग्रामे गहनेऽपि भूरिसुभटश्रेण्या वरे भारते, तुल्याः श्रीसितवाजिना विजयिना वीराः कियन्तोऽभवन् ॥ २ ॥
जिनदत्त इति श्रीमान्, सूरिस्तत्पदभूषणं । अज्ञे सज्ज्ञानमाणिक्यरोहणो विधिपोषणः ॥ ३ ॥
यस्य प्रातिभमन्त्रकल्पकों वाक्चेस्य वाचस्पति—र्वेदोऽप्युरुतत्वबुद्धिवैभवमदः सोऽन्तर्दधे कालया ।

नूनं खारतराणुसचयचिताऽत्यन्ताद्भुतेश्रीस्तनौ, स श्रीमाञ्जिनचन्द्रसूरिरभवाच्छिष्याग्रणीस्तत्पदे ॥ ४ ॥
नानासङ्घादकेलीविदलितविलसन्मानशैल परेषा, रेखा यः प्राप विद्वत्स्वनितरसुलभा सर्वविद्याधवस ।
दृष्टान्तत्व चरित्रिष्वलभत कुमुदध्वान्तविध्वसहस, स श्रीमान् सूरिराजो जिनपतिरभवत् तत्पदालङ्करिष्णु ॥ ५ ॥
चक्रे तच्छिष्यलेशैर्निरुपमजिनपालाभिधेयैः प्रसादा-दत्युग्रात् सद्गुरूणा कुलकविवरण किंचिदेतत् सुबोधम् ।
तच्छोध्यं सूरिवर्यैर्मयि विहितकृपैः सभवन्त्येव यस्माद्, दोषाश्छद्मस्थवाक्ये किमुत कुवचने मादृशा मान्द्यभाजाम् ॥ ६ ॥
श्रीमत्सूरिजिनेश्वरस्य सुमुनिव्रातप्रभोः साप्रत, शीघ्रं चारुमहाप्रबन्धकवितुर्वाक्यात् समारम्भि यत् ।
तन्निष्ठामधुना ययौ गुणनवादित्य ( १२९३ ) प्रमाणे धरे, वर्षे भाद्रपदे सितौ शुभतरे द्वादश्यहे पावने ॥ ७ ॥
जम्बूद्वीपे पुरेऽस्मिन् वहति हि जगती प्रोन्नतायालसीला, यावद् यावच्च धारिस्तबकितपरिखाविभ्रमं वारिराशिः ।
श्राद्धैः श्रद्धाविशुद्धैः सुविहितयतिभिश्चादृतैर्बुद्धिमद्भि-र्नन्द्यान्निर्विघ्नमेतद् विवरणममलं सन्तत पठ्यमानम् ॥ ८ ॥
त्रयस्त्रिंशच्छतान्येव त्रिषष्ट्या सगतानि च । प्रत्यक्षर प्रमाण भोः श्लोकानामिह निश्चितम् ॥ ९ ॥

इति तत्सद्भावेऽपि भवन्ति संपद्यन्ते, 'पूज्याः' सर्वप्रकारेणाराध्याः, 'बुधजनानां' सिद्धान्तरहस्यविचक्षणलोकाना, तदत्र पूयमपि सद्गुरूपदेशश्रवणादिना बुधाः तादृशानां च सुमुनिषु पूजाविधान समीचीनमेवेति, एतदुक्त भवति-समस्ते-प्यपि कुलकेषु देवपूजादिक श्रावकानुष्ठान समस्तमपि अभ्यधायि, तस्य चेदं तात्पर्य-यदुतासमञ्जसजनप्रवृत्तिदर्शनादिना कदाचिन्मनसि नास्थैर्यं विधेय, तद्विधाने हि सर्वमपार्थकं स्यात् इत्येवत् पर्य्यन्तोपदेशकुलक-मिति गाथार्थ ॥ १६ ॥

इति श्रीयुगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यश्लेसविरचितायां श्रावककुलकवृत्तौ श्रावककुलकविवरणं समाप्तम् ॥

समाप्ता चेयं श्रावककुलकवृत्ति, नमोऽस्तु सरस्वत्यै, नमोऽस्तु श्रीमज्जिनपतिसूरिपादेभ्यः, शुभं भवतु ॥

## प्रशस्ति ।

जयन्ति सन्देहलतासिधाराः श्रोत्रप्रमोदामृतवारिधाराः । सूरेर्गिरः श्रीजिनवल्लभस्य महीणपुण्याप्तिसुदुर्लभस्य ॥ १ ॥

आसन् नात्र मुनीश्वराः सुवहव-श्चारित्रलक्ष्म्यास्पद, लोकाः श्रीजिनवल्लभेन सदृशा निर्भीकवाग्विस्तराः ।

सग्रामे गहनेऽपि भूरिसुभटश्रेण्या वरे भारते, तुल्याः श्रीसितवाजिना विजयिना वीराः कियन्तोऽभवन् ॥ २ ॥

जिनदत्त इति श्रीमान्, सूरिस्तत्पदभूषणः । अभूत् सज्ज्ञानमाणिक्यरोहणो विधिपोषणः ॥ ३ ॥

यस्य प्रातिभप्रकम्पकमलां चालोक्य वाचस्पति-र्देवोऽप्युरुतत्कुशिवेमभवमदः क्रुद्धोऽस्तर्पद्वे लज्जया ।

नूनं खारतराणुसंचयचिताऽत्यन्ताद्भुतश्रीखनौ, स श्रीमाञ्जिनचन्द्रसूरिरभवच्छिष्याग्रणीस्तत्पदे ॥ ४ ॥
नानासद्वादकेलीविदलितविलसन्मानशैलं परेषां, रेखां यः प्राप विद्वत्स्वनितरसुलभां सर्वविद्यावतंसः ।
दृष्टान्तल्ल चरित्रिष्यलभत कुमुदध्वान्तविध्वंसहंसः, स श्रीमान् सूरिराजो जिनपतिरभवत् तत्पदालङ्करिष्णुः ॥ ५ ॥
चक्रे तच्छिष्यलेशैर्निरुपमजिनपालाभिधेयैः प्रसादा–दस्मात् सद्गुरूणां कुलकविवरणं किंचिदेतत् सुबोधम् ।
तच्छोध्यं सूरिवर्यैर्मयि विहितकृपैः सम्भवन्त्येव यस्माद्, दोषाश्छद्मस्थवाक्ये किमुत कुवचने मादृशां मान्द्यभाजाम् ॥ ६ ॥
श्रीमत्सूरिजिनेश्वरस्य सुमुनिव्रातप्रभोः सांप्रतं, शीघ्रं चारुमहाप्रबन्धकवितुर्वाक्यात् समारम्भि यत् ।
तन्निष्ठामधुना ययौ गुणनवादित्य ( १२९४ ) प्रमाणे वरे, वर्षे भाद्रपदे सितौ शुभतरे द्वादश्यहे पावने ॥ ७ ॥
जम्बूद्वीपे पुरेऽस्मिन् वहति हि जगती प्रोन्नताशाललीलां, यावद् यावच्च वारिस्तवकितपरिखाविभ्रमं वारिराशिः ।
श्राद्धैः श्रद्धाविशुद्धैः सुविहितयतिभिश्चादृतैर्बुद्धिमद्भि–र्नन्द्यान्निर्विघ्नमेतद् विवरणममलं सन्ततं पठ्यमानम् ॥ ८ ॥
त्रयस्त्रिंशच्छतान्येव त्रिपष्ट्या सगतानि च । प्रत्यक्षरं प्रमाणं भो श्लोकानामिह निश्चितम् ॥ ९ ॥

शुभम् ।

